अवादीदित्यादि। अतः परं यूयं तिष्ठत मा पलायध्वमि त्युच्चैर्महता ध्वनिना कपिरवादीत् उक्तवान् पूर्ववद्वृद्धिः परिषेण तथा तेन प्रकारेण प्रादेवीत् क्रीडति स्म जेतुमैच्छद्वा दिवुजिगी षेच्छापणिद्युतौ क्रीडागत्योः टी णुर्धूङ्इति णुः दिवोधेवेति करणे द्वितीया यथा रणे बहूनां शत्रूणां प्राणान् अयहीत् अपहृतवान् ह्यादेःशेमइति हान्तवर्ज्जनान्न त्रिः॥ ९॥

अणैरवमिषूरक्तं देहैः प्रौर्णाविषुर्भुवं। द्विशः प्रौर्ण विषुश्चान्ये यातुधानाभवद्भियः॥ १०॥

अणैरित्यादि। यातुधानाराक्षसाव्रणैः प्रहारमार्गैः रक्तं शो णितमवमिषुः वमन्ति स्म ह्यन्तेति वृद्धिप्रतिषेधः देहैर्भुवं प्रौर्णा विषुः छादितवन्तः अन्ये यातुधानाःभवद्भियः भवन्तीभीर्येषामिति भयात्पलायमानाः द्विशः प्रौर्णविषुः छादितवन्तः ऊर्णोतेर्विभा षेति विकल्पः ऊर्णोर्विभाषेर्णोरित्यङित्त्वपक्षे द्रष्टव्यः ङित्त्वे गुण वृद्धिप्रतिषेधात्॥ १०॥

अणैरित्यादि। यातुधानाव्रणैः प्रहारमार्गैरक्तं अवमिषुः वमन्ति स्म पूर्ववन्मान्तवर्ज्जनान्न त्रिः देहैर्भुवं प्रौर्णाविषुः आच्छा दितवन्तः भवन्ती विद्यमाना भीर्भयं येषां तेऽन्ये यातुधानाद्विशः प्रौर्णविषुः पलायन्ते स्मेत्यर्थः ऊर्णुञ्आच्छादने णूवन्निश्चामिति वृद्धिरावादेशश्च॥ १०॥

अक्राणिषुश्च्युतोत्साहाभिन्नदेहाः प्रियासवः। कपे
रत्रासिषुर्नादान्मृगाः सिंहध्वनेरिव ॥ ११ ॥

॥ इति सिचि वृद्ध्यधिकारः ॥

अरैत्यादि। च्युतोत्साहाः निरुत्साहाः अरारिषुः रुता: स्म इति शब्दितवन्तः यतः प्रियासवः प्रियप्राणाः कपेः सम्बन्धिनो नादादत्रासिषुः त्रस्ताः उभयत्रापि नेटीति प्रतिषिद्धोऽतो हला देरिति विकल्पः। इति सिचि वृद्ध्यधिकारः ॥ ११ ॥

अक्रेत्यादि। प्रियाअसवः प्राणायेषां ते यातुधानाभिन्नदेहा विदीर्णशरीराभूत्वा निरुत्साहानिस्पृहाः सन्तः अक्राणिषुः रुताः स्म इति शब्दितवन्तः कणशब्दे हयादेःसेमइति पचे त्रिः कपे नीदात् अत्रासिषुः त्रस्ताः पूर्ब्बवत्पचे त्रिः यथा सिंहस्य ध्वनेर्म्मृगा स्त्रस्यन्ति। इति सिचि वृद्ध्यधिकारः ॥ ११ ॥

मायानामीश्वरास्तेऽपि शस्त्रहस्तारथैः कपिं। प्रत्या
ववृतिरे हन्तुं हन्तव्यामारुतेः पुनः ॥ १२ ॥

इतइट्प्रतिषेधमधिकृत्याह मायेत्यादि। अथानन्तरं राक्षसाये द्विशोगताः ते कपिं हन्तुं पुनः प्रत्याववृतिरे प्रतिनिवृत्ताः मायानामीश्वराः प्रभवः स्वेशेति वरच् नेड्वशिकृतीति नेट् आर्द्धधातुकेत्यादिना प्राप्तत्वात् रथैस्तत्र गताः सन्तः शस्त्रहस्ताः शस्त्राणि हस्तेषु येषामिति हनिकुषीत्यादिना रमेरेणा

दिक्षः च्यन् रथाः अभिचमीत्यादिना अवेरोण्यदिक्षनं दृषिम्न म्वश्वेत्यादिना इषेखन् नवोरितुचेत्यादिना इट्प्रतिषेधः ह्नन्ना मारुते रितिहनूमतोवधार्थः अत्यानां कर्त्तरिवेति षष्ठी एकाच इत्यादिना इट्प्रतिषेधः हन्तेर्नेमान्तेष्वनिट्त्वात् ॥ १२ ॥

इतइट्प्रतिषेधाधिकारः मायानामित्यादि। अथानन्तरं ये दिशः प्रोर्णविषुः ते कपिं हन्तुं रथैः पुनः प्रत्यावृत्तिरे प्रत्यागताः प्रतिनिवृत्ता हनसौ गतौ वधे वसोरक्षेमनोदितइति श्रोदिदर्शनादनिम् कीदृशास्ते मायानामोश्वराः प्रभवः यायायभासकसइति वरः इवचतेरिति नेम् शस्त्रं इसे येषां ते तथा शस्यते हन्यतेऽनेनेति शस्त्रं शसवधे चासुम्निति चः पूर्व्ववन्नेम् मारुतेर्हनूमतोहन्तव्याः हन्तुं शक्याः त्यभावेति पचे कर्त्तरि षष्ठी ॥ १२ ॥

## तांश्चेतव्यान् चितौ श्रित्वा वानरस्तोरणं युतान्।
## जघानाधूय परिघं विजिघृक्षून् समागतान् ॥ १३ ॥

तांश्चेतेत्यादि। समुदिताएकस्यामेव वेलायां मया हन्तव्या इति वानरस्तोरणमाश्रितवान् सतोरणं श्रित्वा तान् राचसान् विजिघृक्षून् विगृहीतुमिच्छून् युतान् समुदितान् समागतान् ढौकितान् चितौ पृथिव्यां चेतव्यान् पुञ्जीकर्त्तव्यान् जघान हतवान् परिघमाधूय परिभ्राम्य तत्र चेतव्यानिति एकाचइतीट्प्रतिषेधः चिताविति क्तिप्कौ च वैश्चायामिति क्तिप् तितुचेत्यादिना इट्प्रतिषेधः श्रित्वा युतानिति श्युकः कितीट्प्रतिषेधः विजिघृक्षूनिति

सनिमयहगुहेोश्चेति नत्र रुदविदेति सनः किस्वं ग्रहिज्येति संप्रसा रणं ढलकलपलानि ॥ १२ ॥

तामित्यादि। तोरणं भित्वा परिघमवधूय परिभ्राम्य वानर स्तान् राक्षसान् जघान कीदृशान् चितौ चेतव्यान् पुञ्जीकर्त्त व्यान् युतान् एकीभूतान् विजिघृक्षून् विग्रहं कर्त्तुमिच्छून् समाग तान् मिलितान् चिञ्जस्तव्यः नेमेकाजादित्यादिना इमनिषेधः ऋ दुश्चिन्नूर्णोरिति श्रियुभ्यां नेम् नेमुगुहयहदति ग्रहेः सनि नेम् गमेरोदित्वान्नेम् ॥ १३ ॥

संजुघुक्षव आयूंषि ततः प्रतिरुरुक्षवः। रावणा न्तिकमाजग्मुर्हतशेषा निशाचराः ॥ १४ ॥

संजित्यादि। ततउत्तरकालं ये हतशेषानिशाचराः ते संजु घुक्षव आयूंषि जीवितानि गोहितुमिच्छवः गुहेः पूर्ववत्प्रतिषेधः रावणान्तिकमाजग्मुः आगताः प्रतिरुरुक्षवः वच्यमाणमर्थं कथ यितुमिच्छवः अत्रापि पूर्व्ववत्प्रतिषेधः तत्र चकारेणोगन्तानां सनि समुच्चितत्वात् ॥ १४ ॥

समित्यादि। ततोऽनन्तरं हतशेषानिशाचरारावणस्य समीपमासेदुः समाजग्मुः कीदृशाः आयूंषि जीवितानि गोपायि तुमिच्छवः गुहूञ्संवृतो सन् नेमुगुहयहदति नेम् प्रतिरुरुक्षवः वच्यमाणं कथयितुमिच्छवः रुशब्दे पूर्व्ववन्नेम् ॥ १४ ॥

एकेन बहवः शूराः साविष्काराः प्रमत्तवत्। वैमु ख्यञ्चक्रमेत्युच्चैरूचुर्दशमुखान्तिके ॥ १५ ॥

एकेनेत्यादि। वयं वहवः शूराः साविष्काराः साहंकारा अपि सन्तः एकेनापि कपिना हेतुभूतेन वैमुख्यं यक्षम पराङ्मुखत्वम मुपितवन्तः प्रमत्तवत् मद्यपानमत्ताइव एवञ्च चित्तव्याक्षेपा दुत्तमपुरुषे लिटि कृते कसदित्यादिना इट्प्रतिषेधोनियमित इति एवं दशमुखाग्निके ऊचेऽभ्युः॥ १५॥

एकेनेत्यादि। एकेन कपिना हेतुना वहवोऽपि समर्था अपि प्र मत्ता इव साहङ्कारा अपि वैमुख्यं विमुखतां यक्षम विमुखाभवा मः स्मेत्यर्थात् इति ते हतशेषानिशाचरारावणस्य समीपे ऊचुः नेमसुमिति नेम् परमते अस्मदि वाच्ये चित्तविक्षेपार्थे टी तदर्थ सूचनाय प्रमत्तवदित्युक्तं मद्यपानां हि चित्तविक्षेपः सम्भवत्येव स्वमते सर्व्वत्र टी दुर्निवारा॥ १५॥

मांसोपभोगसंशूनानुद्विग्नांस्तानवेत्य सः। उद्वृत्त नयनोमित्रान्मन्त्रिणः स्वान् व्यसर्ज्जयत्॥ १६॥

मांसेत्यादि। सदशमुखस्तानुद्विग्नान् भीतानवेत्य ज्ञात्वा स्वा नात्मीयान् मन्त्रिणोव्यसर्जयत् प्राहिणोत् कीदृशांस्तान् मांसोप भोगसंशूनान् मांसोपभोगेन स्थूलवर्मणः उभयत्रापि श्वीदितो निष्ठायामितीट्प्रतिषेधः तत्र श्वयतेर्यजादित्वात्संप्रसारणं हल इति संप्रसारणस्य दीर्घः दयोरद्योदित्वान्निष्ठानत्वं उद्वृत्तनय नारोषात् निष्क्रान्ततारकः यस्यविभाषेतीट्प्रतिषेधः वृती इदित्वात् मित्रान् स्निग्धान् मन्त्रिणः आदितश्चेतीट्प्रतिषेधः रदाभ्यामिति निष्ठानत्वं॥ १६॥

मांवेत्यादि। तान् राघवान् उद्दिष्यान् वलान् अवेत्य ज्ञात्वा बरावणोमन्त्रिणोऽभ्यवर्त्तयत् कीदृशान् मांसोपभोगेन वृद्धान् स्थूलान् मितान् स्निग्धान् सकीदृशः उदृत्तनयनः उद्घूर्णितनेत्रः क्रोधवशात् ग्रथोमीर्गतिरुद्धौः नेमडीमीदिति नेम् यजादित्वात् ग्रहस्यपायोरिति जिः जिर्चोऽन्यःस्थान्योदिति ओदित्वात् कस्य नः विजकोगोभीकम्मे ईदित्वात् पूर्व्ववन्नेम् वृतुङ्वर्त्तने पूक्किमुदितद्दत्यनेन वेमत्वात् पूर्व्ववन्नेम् इर्षियाञ् मिदाञ्जिकचद्दति चकारात् खेदने आदितद्दति नेम् ॥ १६ ॥

प्रमेदिताः सपुत्रास्ते सुखान्तावाढविक्रमाः। अश्लिष्टनादानिरगुः फाण्टचित्रास्त्रपाणयः ॥ १७ ॥

प्रमद्दत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुः निर्गताः इणोगालुङि प्रमेदिताः स्निग्धीभवितुमारब्धाः आदिकर्म्मणि निष्ठा ततो विभाषाभावादिकर्म्मणोरिति प्रतिषेधः इट्पचे निष्ठा शीङ्त्यादिना क्लित्वप्रतिषेधात् गुणः सुखान्ताः स्वामिनि कल्याणमनसः वाढविक्रमाः भृशपराक्रमाः अश्लिष्टनादाः विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः यदच्छतपिष्टं कषायं उदकसम्पर्कमात्रादिभक्तरसं ईषदुष्णं तदल्पप्रयाससाध्यत्वात् अनायाससाध्यं फाण्टमित्युच्यते तेन चित्राणि रञ्जितानि अस्त्राणि पाणौ येषामिति स्वान्तादयः चुभ्नेत्यादिना निपातिताः॥ १७॥

प्रमेद्दत्यादि। ते मन्त्रिणः सपुत्राः पुत्रैः सह निरगुर्निर्गतवन्तः रणञ्चा रूपं कीदृशाः प्रमेदिताः वहिर्गमनसमये भार्य्यादीन्

प्रति चौर्य्यं कर्त्तुमारब्धवन्तः राजप्रसादात् स्निग्धाभवितुमारब्धा विविधोपभोगेन प्रीताभवितुमारब्धा वा भावादिकर्मणोरिति पक्षे इम् सुखान्ताः शोभनमनसः वाढविक्रमाः भृशपराक्रमाः अक्लिष्ट नादाः विस्पष्टवाचः मन्त्रिणां वाग्मित्वात् फाण्टचित्रास्त्रपाणयः फाण्टेन कषायभेदेन चित्राणि अस्त्राणि पाणौ येषां ते तथा चुब्धवाढेत्यादिना स्वनवाक्यक्लेशकिर्मिणां स्वान्तवाढक्लिष्टफाण्टा निपातिताः पुनातीति पुत्रः प्वादेः खदत्यस्य योगविभागेन ह्रस्वत्वान्न गुणः ह्रस्वचतेरिति नेम्॥ १७॥

तान् दृष्ट्वातिदृढान्धृष्टान् प्राप्तान् परिवृढाज्ञया।
कष्टं विनर्द्दतः क्रूरान् शस्त्रघुष्टकरान् कपिः॥ १८॥

तानित्यादि। तान् दृष्ट्वा कपिः आर्द्दिददिति वक्ष्यमाणेन सम्बन्धः किंभूतान् धृष्टान् धृष्णोतीति धृष्टः धृषीशसीवैयात्य इतीट् प्रतिषेधः अतिदृढान् वलवतः दृढस्थूलवलयोरिति निपातनं परिवृढाज्ञया परिवृढस्य प्रभोराज्ञया प्राप्तान् प्रभौ परिवृढ इति निपातनं कष्टं विनर्द्दतः कृच्छ्रं ध्वनतः गम्भीररवस्य कृच्छ्रगहनयोः कष इतीट्प्रतिषेधः क्रूरान् हिंस्रान् शस्त्रघुष्टकरान् घुषिरविशब्दन इतीट्प्रतिषेधः॥ १८॥

तानित्यादि। कपिर्हनूमान् तान् राक्षसान् दृष्ट्वा द्रुतं आर्द्दिददित्यग्रिमश्लोकेनान्वयः कीदृशान् अतिदृढान् वलवत्तरान् धृष्टान् प्रगल्भान् परिवृढस्य प्रभोराज्ञया प्राप्तान् कष्टं कृच्छ्रं भी

महुःखदं विमर्द्दितः मन्दाबलानां क्रूरान् हिंस्रान् मल्लैर्मुष्टीभि दण्डी प्राप्तः सततधारणाद्दृष्टोमा करोत्येषां तान् पूर्ववत् इष्ट दृढदृढकषघुष्टाक्ते निपातः ॥ १८ ॥

अभ्यर्णो गिरिकूटाभानभ्यर्णानार्द्दिदत् द्रुतं। वृत्तश्च स्वान्महारम्भानदान्तांस्त्रिदशैरपि ॥ १९ ॥ युग्मकं ॥

अभ्यर्ण इत्यादि। अभ्यर्णोऽपीडितः अर्द्देः संनिविभ्य इतीट्प्रतिषेधः गिरिकूटाभान् महागिरिसदृशप्रमाणान् अभ्यर्णानविदूरान् अभेश्चाविदूर्य इतीट्प्रतिषेधः द्रुतमार्द्दिदत् हिंसितवान् अर्द्देः स्वार्थिकण्यन्तस्य लुङि रूपं वृत्तश्च स्वोऽधीतशस्त्रविद्यः णेरध्ययने वृत्तमिति इडभावो णिलुक् निपात्यते महारम्भान् अनल्पव्यापारान् त्रिदशैरप्यदान्तान् अशमितान् वादान्तेत्यादिना इडभावो णिलुक् निपात्यते ॥ १९ ॥

अभ्यर्ण इत्यादि। गिरिकूटाभान् पर्व्वतशृङ्गसदृशान् अभ्यर्णान् समीपगतान् वृत्तश्च स्वान् अधीतशस्त्रविद्यान् महारम्भान् कृतव्यूहत्वात् त्रिदशैर्देवैरपि अदान्तान् अदमितान् कपिः कीदृशः अभ्यर्णः अपीडितः अर्द्दः क्ते नेम् षण्निव्यद्रु इति नेम् क्षुब्धस्वान्तेत्यादिना सामीप्ये अभिपूर्व्वादर्द्देर्ण्यन्तस्तोरध्ययने च निपातितः ण्यन्तस्य मेर्दान्तशान्तेत्यादिना निपातः ॥ १९ ॥

दमितारिः प्रशान्तौजा नादापूरितदिङ्मुखः। जघान रुषितोहृष्टांस्त्वरितस्तूर्णमागतान्॥ २०॥

दमीत्यादि। ये तु प्रशान्तौजसः प्रमितबलाः सन्तोहृष्टाः तूर्णमागताः तान् कपिर्जघान व्यापादितवान् प्रतापाद्दान्तो ऽस्येति दमितारिः प्रशान्तं प्रभूतमोजो यस्य सप्रशान्तौजाः नादापूरितदिङ्मुखः तस्य रुष्टत्वात् रुषितः क्रुद्धः त्वरितः ससम्भ्रमः अत्र दमितप्रशमितपूरिताः शान्ताः वादान्तेत्यादिना विकल्पितेटः रुष्टरुषितत्वरिताः रुष्यमत्वरेत्यादिना॥ २०॥

दमीत्यादि। कपिस्तूर्णं शीघ्रं आगतान् राक्षसान् त्वरितः सन् जघान कीदृशः दमिताउपशमिता अरयः शत्रवोयेन स तथा नादैरापूरितं दिङ्मुखं येन रुषितः क्रुद्धः कीदृशान् प्रशान्तौजान् उपशमितबलान् हृष्टान् क्रुद्धान् व्यन्तशमेः क्तादम् लोपोऽञेरिति ञिलोपः व्यन्तदमेर्दान्तशान्तेत्यादिना निपातः रुषत्वरिभ्यां क्तस्य वारुषामित्यादिना विभावितइम् त्वरेरनिम्पचे श्विावमवेत्यादिना ऊट्॥ २०॥

तेषां निघ्नन्यमानानां संघुष्टैः कर्णभेदिभिः। अभूदभ्यमितत्रासमाक्रान्ताशेषदिग्जगत्॥ २१॥

तेषामित्यादि। तेषां रक्षसां निघ्नन्यमानानां संघुष्टैः शब्दैः कर्णभेदिभिः वाधिर्य्यकरैः अभ्यमितत्रासं अभिगतत्रासं जगदभूत

आशान्ताः अशेषादिशो यस्मिन् जगति संघुष्टाभ्यमितास्वान्ताः ह्वयमन्तरेति विकल्पितेट:॥ २१ ॥

तेषामित्यादि। हनूमता निहन्यमानानां तेषां राक्षसानां संघुष्टैः शब्दैः जगत् भुवनं अभ्यमितत्रासं प्राप्तभयं अभूत् कीदृशैः कर्णभेदिभिः श्रोत्रविदारिभिः कीदृशं अस्वान्ता आशा स्निता अशेषादिशो यत्र तत्तथा संपूर्व्वघुषम् आङ्पूर्व्वस्वनाश्च वाह्वषामि त्यादिना ककवलोर्वैमर्थ॥ २१।

भयसंहृष्टरोमाणस्ततस्तेऽपचितद्विषः। क्षणेन क्षीण विक्रान्ताः कपिनानेषत क्षयं॥ २२॥

इतीट्प्रतिषेधाधिकारः॥

भयमित्यादि। ततस्ते राक्षसाः कपिना क्षणेन क्षयं विनाशमने षत नीताः कर्म्मणि लुङ् भयसंहृष्टरोमाणः भयोद्गतरोमाञ्चाः हृषेर्लोमस्विति विभाषितेट् अपचितद्विषः अपचितानां पूजिता नां ऋषीणां शत्रवः अपचितश्चेति निपातः क्षीणविक्रान्ताः क्षीणं वि क्रान्तं पराक्रमो येषां क्षियोदीर्घादिति निष्ठातकारस्य नः॥ २२॥

भयेत्यादि। ततोऽनन्तरं कपिना ते राक्षसाः क्षणेन क्षयं अने षत प्रापिताः कर्म्मणि टी णुर्भुंङिति णुः मान्तोऽदनतइत्यदादेशः न्यादिन्यन्ताडगत्यर्थी इति मुख्यकर्म्माणं कीदृशाः भयेन संहृष्टानि उद्गतानि रोमाणि येषां वाहृषामहृषेति वेम् अपचितानां पूजि तानां मुन्यादीनां द्विषः शत्रवः नेमेकाजितिनेम् क्षीणं विक्रान्तं

पराक्रमोऽषेषां षे: पूर्ब्बवन्नेम् षेर्त्तोडे इति दीर्घत्वं सख्यायोरित्यादि ना नस्य न: अमुगताविय्यस्य पूक्किसुदित इत्यनेन वेम्त्वात् नेम् डीश्वीद्दिति नेम् अमुक्ममवणाविति घं:। इतीट्प्रतिषेधाधिकार:
॥ २२ ॥

हत्वा रक्षांसि लवितुमक्रमीन्मारुतिः पुनः। अशोक वनिकामेव निगृहीतारिशासनः॥ २३॥

इत: प्रभृतीटमधिकृत्याह हत्वेत्यादि। रक्षांसि हत्वा मारुतिरशोकवनिकामेव पुनर्लवितुं छेत्तुं आर्द्धधातुकस्येट् अक्रमीत् गतवान् स्नुक्रमोरनात्मनेपदनिमित्त इतीट् निगृहीतारिशासन: अस्यारिव्यवस्थ: ग्रहोलिटि दीर्घ इतीटो दीर्घत्वं॥ २३॥
अथेडधिकार:। हत्वेत्यादि। रक्षांसि हत्वा निगृहीतरावणशासनो मारुतिर्हनूमान् पुनरप्यशोकवनिकामेव लवितुं छेत्तुं अक्रमीत् जगाम स्नुक्रमिच्छि वसोरस्येतीम् क्रमेष्टी स्नुक्रमोऽमन इतिदम् मात्मवर्ज्जनात् हसादे:सेम इति न त्रि: ग्रहेरिमोर्घत्वं॥ २३॥

आवरीतुमिवाकाशं वरितुं वीनिवोत्थितं। वनं प्रभञ्जनसुतो नादयिष्ट विनाशयन्॥ २४॥

आवेत्यादि। प्रभञ्जनसुतो हनूमान् वनमशोकवनिकाख्यं विनाशयन् नादयिष्ट ध्वनिं न कृतवान् लुङि रूपं आकाशमावरीतुमिव अवष्टब्धुमिवोत्थितं वनं वीन् पक्षिणो वरितुं प्रार्थयितु

मिवोस्थितं आगच्छन् गोन्धाः घात इवैव फलवृद्धिं शाखयेति आवरीतुं वरितुमिति वृतोवेति विकल्पेनेटोदीर्घत्वं ॥ २४॥

आवेत्यादि। प्रभञ्जनसुतो हनूमान् वनं विनाशयन् न अद्धयिष्ट दृष्टां न ज्ञातवान् कीदृशं आकाशं आवरीतुं आच्छादयितुमिव वीन् पक्षिणो वरितुं प्रार्थयितुमिव उत्थितं अत्युच्चत्वात् उच्चलोग्रीवा मेमैकाजित्यादौ वृवर्ज्जनादिम् वृतोवेनोर्घ इति वादीर्घः॥ २४॥

वरिषीष्ट शिवं यस्य मैथिल्याः कल्पशाखिनः।
प्रावारिषुरिव क्षौणीं क्षिप्तावृत्ताः समन्ततः॥२५॥

वरीत्यादि। ये कल्पशाखिनः कल्पवृक्षाः स्वर्गादानीयारोपितास्तानुमूल्य यथास्थानं क्षिपन् मैथिल्याः शिवं कल्याणं वरिषीष्ट प्रार्थितवान् मैथिल्याभद्रमस्त्वित्याशंसावचने लिङ् वलिङ्ङीति दीर्घप्रतिषेधः अन्ये च वृक्षास्तेन समन्ततः क्षिप्ताः सन्तः क्षौणीं पृथ्वीं प्रावारिषुरिवाच्छादितवन्त इव लिघामनाच्छादितत्वादिवार्थः सिचि वृद्धिः परस्मैपदेष्विति वृद्धिः॥ २५॥

वरीत्यादि। हनूमान् मैथिल्याः शिवं मङ्गलं वरिषीष्ट प्रार्थितवान् आशिषि टो स्यायूद्दुरिति पक्षे इम् अठोदीपसेरिति नेमोदीर्घः किङ्कुर्व्वन् ये कल्पवृक्षाः स्वर्गादानीयाशोकवनिकायामारोपितास्तानुन्मूल्य यथास्थानं क्षिपन्ननुप्रेरयन् शिवशब्दस्य हितार्थत्वात् समार्थैरित्यादिना मैथिल्या इत्यत्र षष्ठी अन्ये वृक्षाः

समन्ततस्तेन क्षिप्ताः शोणितं भूमिं प्रावारिषुरिव आच्छादितवन्त इव आत्मनि रूपं पूर्व्ववदेवार्थः ॥ २५ ॥

संवुवूर्षुः स्वमाकूतमाज्ञां विवरिषुं द्रुतं। अवरिष्टा
क्षमक्षम्यं कपिं हन्तुं दशाननः ॥ २६ ॥

सम्बुद्रित्यादि। रामदूतेन कपिना कर्म्मेदृशं कृतमिति स्वमाकूतमभिप्रायं सम्बुवूर्षुः सम्वरीतुमिच्छुः दशाननोऽद्भुतमाज्ञां विवरिषुः प्रकटितुमिच्छुः अयं स्वसुतमवरिष्ट प्रार्थितवान् कर्म्मभिप्राये तङ् किमर्थं कपिं हन्तुं हनिष्यामीति अक्षमं क्षन्तुमशक्यं पोरदुपधादिति यत् सम्बुवूर्षुः विवरिषुरिति उगन्तत्वात् सनि ग्रह गुहोश्चेति, चकारेणेट्प्रतिषेधे प्राप्ते इट् सनिवेति विभाषेट् तत्रानिट्पक्षे इकोझलीति कित्त्वे उदोष्ठ्यपूर्व्वस्येत्युत्वं पक्षे गुण एव ॥ २६ ॥

समित्यादि। अथ दशाननोऽद्भुतं कपिं हन्तुं अक्षनामानं कुमारं अवरिष्ट प्रार्थितवान् पक्षे इमोऽर्थाभाव: कीदृशं अक्षमं न क्षमार्हं कीदृशः कपिमात्रेण रामदूतेनैवं कृतमिति स्वमाकूतं स्वकीयमाशयं संवुवूर्षुः संवरीतुमिच्छुः आज्ञां विवरिषुः हे अक्षागच्छागच्छ कपिर्हन्यतामित्याज्ञां विवरीतुं प्रकटयितुमिच्छुः स्वाधृदृगुरिति इडभावः सनीवेम् अनिट्पक्षे ऽज्झनगमां सनीति दीर्घत्वे पुनः निमित्तनीत्यणुत्वात् उदिरयावित्युर् ॥ २६ ॥

जवे संवरिषीष्ठास्त्वं गच्छ शत्रोः पराक्रमं। ध्वृषी
ष्ठा युधि मायाभिः स्वरिता शत्रुसंमुखं॥ २७॥

जवेइत्यादि। किमित्याह त्वं गच्छ शत्रोः पराक्रमं सम्वरिषी
ष्ठाः संछादय आशिषि लिङ्सिचोरात्मनेपदेष्विति वृञो विभा
षेट् उश्चेतीट् पक्षे न कित्वं ध्वृषीष्ठाः युधि मायाभिः करण
भूताभिः त्वं कुटिलीकृषीष्ठाः ध्वृ हर्छने ऊर्द्धाकौटिल्ये तस्य चोदा
त्तत्वात् आशिषि कर्मणि लिङ् ऋतश्च संयोगादेरिति विभाषेट्
अनिट्पक्षे उश्चेति कित्त्वं स्वरिता उपतापयिता शत्रुसंमुखं
शत्रोरग्रतः अतोद्रुतं स्वरिषीष्ठा इति वक्ष्यमाणेन योज्यं स्वृशब्दो
पतापयोरित्यस्य स्वरति सूतिसूयेत्यादिना विभाषेट् लिङ्सि
चोरिति नानुवर्त्तते॥ २७॥

जवेइत्यादि। विवरणमाह दशाननजवे किमित्याह हे अच
त्वं गच्छ गत्वा शत्रोः कपेः पराक्रमं संवरिषीष्ठाः आच्छादय
आशिषि टौ पूर्व्ववत् पक्षे इम् त्वं युधि संग्रामे मायाभिः कर्म्मभिः
ध्वृषीष्ठाः कुटिलीकृषीष्ठाः ध्वृ कौटिल्ये कर्म्मणि टौ स्वाद्यृदृदुरिति
पक्षे इमोऽभावे इगुडुमेढीश्चनिमइति कित्वान्न गुणः त्वं कीदृशः
शत्रुसंमुखं यथा स्यात्तथा स्वरिता शत्रोरग्रतउपतापयितेत्यर्थः
किम्वा शत्रुसंमुखं शत्रूणां प्रधानं स्वरिता उपतापनशीलः मुख
माद्ये प्रधानेचेत्यमरः स्वृशब्दोपतापयोः वेमूदित्स्वरेति पक्षे
इम्॥ २७॥

द्रुतं संस्वरिषीष्ठास्त्वं निर्दयः प्रधनोत्तमे। समाया
नामगात् सीता कपेर्विधवितुं द्युतिं॥ २८॥

द्रुतमित्यादि। संस्वरिषीष्ठाः उपतापय निर्भयस्त्वान् आशिषि लिङ् समोगम्यृच्छीत्यात्मनेपदं अत्र स्वरतस्वेतीट् प्रधनोत्तमे संग्रामवरे एवमुक्तः सन् समायानां सोता जनकः कपेर्द्युतिन्तेजो विधवितुमपनेतुमगात् गतः सोता धवितुमिति स्वरतीत्यादिसूत्रेण विभाषेट्॥ २८ ॥

द्रुतमित्यादि। त्वं प्रधनोत्तमे महायुद्धे निर्भयः सन् द्रुतं सं स्वरिषीष्ठाः उपतापय शत्रुमित्यर्थात् समोगम्यृच्छेति सं एवमुक्तः सोऽचः कपेर्द्युतिं तेजो विधवितुं अपनेतुं अगात् गतः कीदृशः मायानां सोता जनकः सूधुञ्चां पूर्व्ववत् पचे इम्॥ २८ ॥

विगाढारं वनस्यासौ शत्रूणां गाहिता कपिः। अर्त्तं रधितुमारेभे रद्धा लङ्कानिवासिनां॥ २९ ॥

विगेत्यादि। असौ कपिः वनस्य विगाटा अवलोडयिता अरं शीघ्रं शत्रूणां गाहिता विनाशयिता कर्म्मणि षष्ठी ऊदित्वाद्विभाषेट् स्वरतीत्यादिना अर्च्चं रधितुं हिंसितुमारेभे प्रवृत्तः लङ्कानिवासिनां रक्षसां रद्धा हिंसिता रधादिभ्यश्चेति विभाषेट्॥ २९ ॥

विगेत्यादि। असौ हनूमान् अर्च्चं रधितुं हिंसितुं आरेभे प्रवृत्तः कीदृशः अरं शीघ्रं वनस्य विगाढा विलोडयिता शत्रूणां गाहिता नाशयिता लङ्कानिवासिनां रद्धा हन्ता गाहूविलोडे इत्यस्य ऊदित्वात् रधहतौ इत्यस्य च रधादित्वात् पूर्व्ववद्विभाषया इम्॥ २९ ॥

निष्कोषितव्यान्निष्कोष्टुं प्राणान् दशमुखात्मजात्।
आदाय परिघं तस्थौ वनान्निष्कुषितद्रुमः ॥ ३० ॥

निष्केत्यादि। दशमुखात्मजादक्षात् प्राणान्निष्कोषितव्यान् अपनेतव्यान् अपनयार्हान् निष्कोष्टुं अपनेष्यामीति परिघमादाय तस्थौ निरःकुष इति विभाषेट् निष्कुषितद्रुमः वनादपनीतवृक्षः इषिष्ठायामितीट् ॥ ३० ॥

निष्केत्यादि। दशमुखात्मजात् अक्षात् निष्कोषितव्यान् आकर्षणयोग्यान् प्राणान् निष्कोष्टुं अपहर्त्तुं परिघं आदाय गृहीत्वा कपिः तस्थौ कीदृशः वनात् निष्कुषिता आकृष्टा द्रुमा वृक्षा येन पूर्ब्बवत् निःपूर्ब्बकुषोवेम् नेमुश्वीदिदेम् इति नेनेम् निषेधस्तत्र निष्कुषवर्ज्जनात् ॥ ३० ॥

एष्टारमेषिता संख्ये सोढारं सहिता भृशं। रेष्टारं रेषितुं व्यास्थद्रोष्टाक्षः शस्त्रसंहतीः ॥ ३१ ॥

एष्टेत्यादि। कपिं युद्धस्यैष्टारं एषिता एषणशीलोऽक्षः ताच्छील्ये तृन् नलोकेति षष्ठीप्रतिषेधः सोढारं प्रहरणस्य सहितारं सहिता भृशं सहनशीलः रेष्टारं हिंसकं रेषितुं हिंसितुं रोष्टा रोषणशीलः शस्त्रसंहतीर्व्यास्यत् चिप्तवान् लङि रूपं सर्व्वत्र तीषसहेत्यादिना वेट् ॥ ३१ ॥

एष्टेत्यादि। अयः संख्ये युद्धे रेष्टारं हिंसकं हनूमन्तं देवितुं चिदिषितुं शस्त्रसमूहान् आस्यत् क्षिप्तवान् अक्षुरमेधे को कीदृशं एष्टारं इच्छाशीलं युद्धमित्यर्थात् सोढारं सहनशीलं भृशमत्यर्थं सोऽपि एषिता एषणशीलः सहिता सहनशीलः रेष्टा रोषण शीलः इषुसहाह्मे सहजङ्गशौ रिषवधे इत्यपि चकारात् वधे वेमसहेत्यादिना वेम्॥ ३१ ॥

शस्त्रैर्दिदेविषुं संख्ये दुद्यूषुः परिघं कपिः। अर्दिधिषु र्यशःकीर्त्तिमीर्त्सुं वृक्षैरताडयत्॥ ३२ ॥

शस्त्रैरित्यादि। कपिः अर्दिधिषुः यशोवर्द्धितुमिच्छुः परिघं दुद्यूषुः परिघेण क्रीडितुमिच्छुः अचं वृक्षैरताडयत् हतवान् कीदृशं शस्त्रैर्दिदेविषुं क्रीडितुमिच्छं कीर्त्तिमीर्त्सुं वर्द्धितुमिच्छुं दिवेरिवन्तस्य ऋधुदृद्धावित्यस्य च सनीवन्तर्द्धेत्यादिना विभाषितेट् तत्र दिवे रिडभावपक्षे छोः शूठ् ऋधेराप्ज्ञप्धामीदितीत्वं अभ्यासलो पश्च॥ ३२ ॥

शस्त्रैरित्यादि। कपिः संख्ये युद्धे वृक्षैरचमताडयत् अचं कीदृशं शस्त्रैर्दिदेविषुं क्रीडितुमिच्छन्तं ईर्त्सुं वर्द्धयितुमिच्छुं कपिः कीदृशः परिघेण दुद्यूषुः क्रीडितुमिच्छुः दिवोधेवेति करणे द्विती या यशोऽर्दिधिषुः वर्द्धयितुमिच्छुः दिव्यक्रीडादौ भ्रस्जश्रिस्वृ यूर्णुभरेत्यादिना इवन्तत्वात् सनोवेम् इमोऽभावपक्षे छोः शूठा वित्यादिना ऊठ् ऋधुवृद्धौ पूर्व्वेण सनोवेम् आप्ज्ञप्यादेरादिर्दि

रित्यकारस्य स्थानिवद्भावेऽयेरिति रेफस्य च न द्वित्वं अनिमपक्षे उपधायामीर्घ्य इति ईर खिलोपस्य असिद्धत्वात्याभेऽत्र बोध्यः ॥ ३२ ॥

भूयस्तं धिप्सुमाहूय राजपुत्रं दिदम्भिषुः। अर्हंस्ततः समूर्च्छावान् संशिश्रीषुरभूद्ध्वजं ॥ ३२ ॥

भूयइत्यादि। तं राजपुत्रं अक्षं धिप्सुं दम्भितुं वञ्चयितुमिच्छुं भूयः पुनरपि दिदम्भिषुः वञ्चयितुमिच्छुः आहूयागच्छेत्याह्वयन् हतवान् ततः सोऽक्षः मूर्च्छावान् मूर्च्छायुक्तः ध्वजमात्मीयं संशिश्रीषुः संश्रयितुमिच्छुः अभूत् भूतः अत्र दम्भेः श्रयतेश्च सनीवन्तर्द्धेतीट् अत्र श्रयतेरनिट्पक्षे अज्झनगमां सनीति दीर्घः द्वितीयस्य च इकारस्य अभ्यासलोपः दम्भेर्हल् ग्रहणस्य जातिपरत्वात्सिद्धमिति किन्त्वे अनुनासिकलोपः एकाचोवशइति भष् खरिचेति चर्त्वं ॥ ३२ ॥

भूयइत्यादि। कपिस्तमक्षं आहूय आगच्छ युद्धे इत्युक्त्वा भूयः पुनरपि अहन् हन्तेर्घ्नी कीदृशं धीप्सुं दम्भं कर्त्तुमिच्छं सच दिदम्भिषुः दम्भं कर्त्तुमिच्छुः ततः प्रहारानन्तर सोऽक्षोध्वजं संशिश्रीषुः आश्रयितुमिच्छुः सन् मूर्च्छावान् मूर्च्छितोऽभूत् भस्जश्रीत्यादिना दम्भेः श्रयतेश्च सनीवेम् दम्भेरनिम्पक्षे दम्भेयावितिं अचईत्वं खिलोपस्य अनकारनिर्देशात् नस्य लोपः झभान्तस्येति इस्य धः श्रयतेर्वोऽज्झनिङ्गमामिति दीर्घः ॥ ३२ ॥

आश्वस्याक्षः क्षणाल्लोकान् बिभ्रक्षुरिव तेजसा।
रुषा विभ्रज्जिषुप्रख्यं कपिं बाणैरवाकिरत्॥ २४॥

आश्वेत्यादि। क्षणात् क्षणमात्रेणाश्वस्य संज्ञां लब्ध्वा लोकान् जनान् तेजसा क्रोधोत्थेन बिभ्रक्षुरिव अथ स कपिं बाणैरवाकिरत् संछादितवान् कीदृशं विभ्रज्जिषुप्रख्यं अग्नितुल्यं बिभ्रज्जिषुः बिभ्रक्षुरिति सनीवन्तर्द्धेत्यादिना विभाषेट् तत्रानिट्पक्षे स्कोरिति सलोपः व्रश्चेति षः इट्पक्षे सकारस्य जश्त्वं चुत्वञ्च॥ २४॥

आश्वस्येत्यादि। ततोऽक्षः क्षणात् आश्वस्य चेतनां प्राप्य बाणैः कपिमवाकिरत् आच्छादितवान् कीदृशः तेजसा लोकान् बिभ्रक्षुरिव क्रोधलक्षणमत्र तेजः रुषा क्रोधेन विभ्रज्जिषुप्रख्यं अग्नितुल्यं भ्रस्जञ्जीति भ्रस्जेः सनि वेम्॥ २४॥

संयुयूषुं दिशो बाणैरक्षं यियविषुर्द्रुमैः। कपिर्मायामिवाकार्षीद्दर्शयन् विक्रमं रणे॥ २५॥

समित्यादि। बाणैर्दिशः संयुयूषुं मिश्रयितुमिच्छुं अक्षं कपिः द्रुमैर्यियविषुः योतुमिच्छुर्मायामिवेन्द्रजालमिवाकार्षीत् कृतवान् रणे विक्रमं दर्शयन् यौतेः सन् सनीवन्तर्धेति विभाषेट् ओः पुयण्ज्यपरे इतीत्वं अज्झनगमां सनीति दीर्घः॥ २५॥

समित्यादि। कपी रणे विक्रमं दर्शयन् मायामिव अकार्षीत् इन्द्रजालमिव दर्शितवानित्यर्थः कीदृशः द्रुमैरक्षं यियविषुः मिश्र

पुनर्वनं बभञ्ज कीदृशं पक्षिभिः पक्षिभिः क्षुधित्वा क्षुधितैर्भूत्वा अध्युषितं कृतनिवासं वसतिक्षुधोरितीट् ॥ ३९ ॥

पवितइत्यादि। कपिः क्षुधित्वा क्षुधितोभूत्वा पयोनिधौ पूत्वा स्नात्वा फलादिकं भुक्त्वा चेत्यर्थात् शीतलैरनुगुणैर्वातैः पवितश्च कृतश्रमः सन् भूयः पुनरपि तद्वनं बभञ्ज भग्नवान् कीदृशं पक्षिभिः पक्षिभिरध्युषितं अधिष्ठितं क्षणं भङ्गाभावात् पूञः पूङ्क्लिशवमेतिक्त्वावलोर्वेम् पूङ्शीधृषेत्यादिना णुः पूङ्क्लिशऽदितइति क्त्वाचोवेम् वसेः क्षुधेश्च क्षुधवसपूजार्थाञ्च इतीम् ॥ ३९ ॥

उच्चैरञ्चितलाङ्गूलः शिरोऽञ्चित्वेव संवहन्। दधद्विलुभितं वातैः केशरं वह्निपिङ्गलं ॥ ४० ॥

उच्चैरित्यादि। उच्चैरूर्द्धं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य शोभनविन्यासेन स्थितत्वात् शिरोऽञ्चित्वेव सम्वहन् अनम्रत्वात् पूजयित्वेव शिरोविभ्राणः अञ्चेः पूजायामिति विभाषेट् वह्निपिङ्गलञ्च केशरं सटां दधत् बिभ्रत् वातैर्विलुभितं आकुलितं लुभोविमोहनइतीट् विमोहनमाकुलीकरणं ॥ ४० ॥

उच्चैरित्यादि। कपिः कीदृशः उच्चैरञ्चितलाङ्गूलः ऊर्द्धं अञ्चितं पूजितं लाङ्गूलं पुच्छं यस्य सतथा शिरोऽञ्चित्वेव अनम्रत्वात् पूजयित्वेव संवहन् विभ्राणः वातैर्विलुभितं चञ्चलीकृतं वह्निवत्पिङ्गलं केशरं दधत् धारयन् ईदृशोवनं बभञ्जेति पूर्व्वेणान्वयः क्षुधवसपूजार्थाञ्चागार्ध्यार्थलुभइति इम् नेदित्पूजार्थाञ्चेरिति नलोपाभावः ॥ ४० ॥

जरित्वेव जवेनान्ये निपेतुस्तस्य शाखिनः। व्रश्चित्वा विवशानन्यान् बलेनापातयत्तरून्॥ ४१॥

जरीत्यादि। तस्य कपेर्जवेन वेगेन अन्ये शाखिनः जरित्वेव जीर्णाइव भूत्वा निपेतुः अन्यांस्तरून् बलेन व्रश्चित्वा छित्त्वा विवशान् खस्तपल्लवानपातयत् पातितवान् जृव्रश्चोः क्त्वीतीट्॥ ४१॥

जरित्वेत्यादि। अन्ये शाखिनः तस्य कपेर्ज्जवेन वेगेन जरित्वेव जीर्णाइव भूत्वा निपेतुः निपतितवन्तः अन्यान् विवशान् अनायत्तान् तरून् बलेन व्रश्चित्वा छित्त्वा कपिरपातयत् पातयामास जृव्रश्चोरनजिरिति इम् जिनिषेधस्य॥ ४१।

दमित्वाप्यरिसंघातानश्रान्त्वा कपिकेशरी। वनं चचार कर्त्तिष्यन्नर्त्स्यन्निव निरङ्कुशः॥ ४२॥

दमीत्यादि। कपिकेशरी हनूमान् अरिसङ्घातान् दमित्वा उपशमं नीत्वा अश्रान्त्वा अपरिश्रान्तोभूत्वा वनं चचार उदितो वेति विकल्पेनेट् निरङ्कुशः निरवग्रहः कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तुकामइव सेसिचीत्यादिना विभाषेट्॥ ४२॥

दमित्वेत्यादि। कपिकेशरी हनूमान् शत्रुसमूहान् दमित्वा नाशयित्वापि अश्रान्त्वा अश्रान्तोभूत्वा वनं कर्त्तिष्यन् छेत्स्यन् नर्त्स्यन्निव नर्त्तितुकामइव निरङ्कुशोनिरवग्रहः सन् चचार

बभ्राम इत्यद्र्थमे अमुभ्यद्दर्त्तपःखेदयोरुदिलात् पूद्धिश्चइति इति वेम् तृतीयपछिदि नृत्यनृत्ये अनयोर्नृत्कृदिति वेम्॥ ४२॥

पारं जिगमिषन् सोऽथ पुनरावर्त्स्यतां द्विषां। मत्त द्विरदवद्रेमे वने लङ्कानिवासिनां॥ ४३॥

पारमित्यादि। अथ सकपिर्द्विषां पारं जिगमिषन् गन्तुमिच्छन् गमेरिट्परस्मैपदेषु पुनरावर्त्स्यतां प्रतीपीभविष्यतां नवृद्भ्य इतीट्प्रतिषेधः वृद्भ्यःस्यसनोरिति परस्मैपदं लङ्कानिवासिनां वने मत्तद्विरदइव रेमे क्रीडितवान्॥ ४३॥
पारमित्यादि। अथानन्तरं सहनूमान् पुनरावर्त्स्यतां प्रत्यागमिष्यतां लङ्कानिवासिनां द्विषां शत्रूणां पारमन्तं गन्तुं इच्छुः सन् वने मत्तहस्तीव रेमे क्रीडति स्म गमेऽमेसइति गच्छतेरिम् वृद्भ्योनेम्पदइति वृतेर्नेम् अतएव पं॥ ४३॥

यद्यकल्प्स्यदभिप्रायोयोद्धुं रक्षःपतेः स्वयं। तमप्यकर्त्स्यमद्याहं वदन्नित्यचरत्कपिः॥ ४४॥

यद्येत्यादि। रक्षःपतेः रावणस्य स्वयं योद्धुं यद्यभिप्रायोऽकल्प्स्यत् समपत्स्यत् तासिचकपइति चकारात् स्यकारेच नेट् तदा तमप्यहमकर्त्स्यं उत्सारयामि अहमद्येति एवं वदन् कपि

र्वनमचरत् क्षेसोचीत्यादिना विभाषेट् अकल्प्स्यदकर्त्स्यमिति च लिङ्निमित्तइति लृङ् हेतुहेतुमद्भावस्य लिङ्गोनिमित्तं॥ ४४॥

यद्येत्यादि। यदि रक्षःपतेरावणस्य स्वयं योद्धुमभिप्रायो ऽकल्प्स्यत् कल्पिष्यते तमप्यद्याहमकर्त्स्यं अच्छेत्स्यं इति वदन् कपि रचरत् चरति स्म लृपूर्ब्ब्वचकत्पने पूर्व्ववत् वृतादित्वात् स्यस नेम् वृतोवापच्छिदि नृत्कृदिति वेम्॥ ४४॥

हते तस्मिन् प्रियं श्रुत्वा कल्प्ता प्रीतिं परां प्रभुः। तोषोऽद्यैव च सीतायाः परश्चेतसि कल्प्स्यति॥ ४५॥

हतइत्यादि। हते तस्मिन् रक्षःपतौ प्रियं श्रुत्वा प्रभुः रामः परां प्रीतिं कल्प्ता जनयिता अन्तर्भावितोण्यर्थः धातोरकर्म्म कत्वात् सीतायाश्चाद्यैव चेतसि तोषः परोमहान् कल्प्स्यति संप त्स्यते तासिचक्लृपइतीट्प्रतिषेधः लुटिचक्लृपइति परस्मैपदं॥४५॥

हतेइत्यादि। तस्मिन् रावणे हते सति प्रियं श्रुत्वा प्रभूरामः परां प्रीतिं कल्प्ता प्राप्स्यति नेम्पेक्षाइति तेनैव पं किञ्च अद्यैव च अधुनैव च सीतायाश्चेतसि परस्तोषः कल्प्स्यति भविष्यति पूर्ब्ववत् वृतादित्वात् स्यसनेम् इति वदन् कपिरचरदिति पूर्ब्बेणान्वयः ॥ ४४॥

आहूय रावणोऽवोचद्येन्द्रजितमन्तिकात्। वने मत्तइव क्रुद्धोगजेन्द्रः प्रधनेष्वटन्॥ ४६॥

आह्वयेत्यादि। अथ रावणः इन्द्रजितमाह्वय अन्तिकमवोचत् किमवोचदित्याह वने मत्तइव यथा गजेन्द्रोमत्तः क्रुद्धोवने पर्य्यटन् द्विषामन्तं गतवान् तथा त्वं प्रधनेषु संग्रामेष्वटन् द्विषामन्तं ययाथेति वक्ष्यमाणश्लोकेनान्वयः॥ ४६॥

आह्वयेत्यादि। अथानन्तरं अन्तिके समीपे इन्द्रजितमाह्वय रावणोऽवोचत् उक्तवान् किमवोचदित्याह त्वं क्रुद्धः सन् प्रधनेषु युद्धेषु अटन् परिभ्रमन् वने मत्तोगजेन्द्रइव द्विषामन्तं ययाथेत्यग्रिमश्लोकेनान्वयः मदीभिर्यज्जिहर्षे नेम्डीश्वीदिति ईदित्वान्नेम् खल्वाद्योंदित्यादौ मदवर्ज्जनात्र क्रस्य नः क्रुधयोकोपे श्रौदित्वान्नेम्॥ ४६॥

ययाथ त्वं द्विषामन्तं भूयोयातासि चासकृत्। शशक्थ जेतुं त्वं देवान् मायाः सस्मर्थ संप्रति॥४७॥

ययेत्यादि। न केवलं ययाथ भूयः पुनरपि यातासि यास्यसि यातेः क्रादिनियमात्प्राप्तस्येटः अचस्तास्वत्थल्यनिटोनित्यमिति प्रतिषेधः तस्य हि तासौ नित्यमनिट्त्वं अजन्ताधातवोऽनुदात्तइति वचनात् देवान् जेतुं त्वमसकृत् बहुधा शशक्थ शक्तोषि उपदेशेऽत्वतइति थलोट्प्रतिषेधः शकेस्तासौनित्यानिट्त्वं शकिस्तुकान्तइति वचनात् मायाश्च कूटयुद्धानि सम्प्रति युद्धे सस्मर्थ ज्ञातवानसि ऋतोभारद्वाजस्येतीट्प्रतिषेधः॥ ४७॥

ययाथेत्यादि। असकृत् वारंवारं दिषामन्तं ययाथ प्राप्तवानसि सृजदृशजिति वेम्त्वं भूयः पुनरपि यातासि च यास्यसि च नेमेकाजिति नेम्त्वं देवान् जेतुं शशक्थ शक्तोभूतोऽसि सृजदृशजिति वेम् संयति युद्धे मायावक्रीः सस्मर्थ स्मृतवानसि नेमृतस्तप इति नेम्॥ ४७॥

त्वं ससर्जिथ शस्त्राणि ददृष्ठारींश्च दुःसहान्। शस्त्रैरादिथ शस्त्राणि त्वमेव महतामपि॥ ४८॥

त्वं सेत्यादि। शस्त्राणि त्वं ससर्जिथ चिप्तवानसि अरींश्च दुःसहान् युध्यतः ददृष्ठ दृष्टवानसि न पलायितोऽसि विभाषासृजिदृशोरिति थलि विभाषेट् अनिट्पचे सृजिदृशोर्झल्यमकिति थलि घुले महतामपि मध्ये त्वमेव शस्त्राणि परकीयानि शस्त्रैः स्वैरादिथ जग्धवानसि इडत्यर्तिव्ययतीनामित्यदेरिट्॥ ४८॥

त्वमित्यादि। त्वं शस्त्राणि च ससर्जिथ चिप्तवानसि सृजदृशेति वेम् दुःसहानरीन् ददृष्ठ दृष्टवानसि पूर्ववद्वेम्त्वात् पचेऽनिम् सृजदृशजिति षङ् वर्द्धेकिदिति चतोरः स्वकीयैः शस्त्रैः त्वमेवादितीयः महतामिन्द्रादीनामपि शस्त्राणि आदिथ भचितवानसि सृजदृशेत्यादौ अदवर्ज्जनान्नेमुमित्यादिना नियमात् नित्यमिम्॥ ४८॥

स त्वं हनिष्यन् दुर्व्वृद्धिं कपिं व्रज ममाज्ञया। मानाञ्जीराचसीर्म्मायाः प्रस्तावीर्म्मा न विक्रमं॥ ४९॥

सत्वमित्यादि। स त्वमेवंविधः कपिं दुर्बुद्धिं चपलत्वाद्धनिष्य
न्निति मदाज्ञया व्रज हन्तेर्नोस्यइतीट् वक्ष्येकाजिति सूचयं नो
दाहृतं फलादेशस्य छन्दोविषयत्वात् राक्षसीं मायां मा नाञ्जीः
मा न व्यक्तीकुरु अपितु व्यक्तीकुर्व्वित्यर्थः अञ्जेःसिचीतीट् विक्रमं
न मा प्रस्तावीः मा न प्रादुरभूश्च स्तुसुधुञ्भ्यइतीट्॥४९॥

सत्वमित्यादि। सएवंविधः प्रसिद्धस्त्वं दुष्टमतिं कपिं हनि
ष्यन् विनाशयिष्यन् ममाज्ञया व्रज गच्छ स्यस्यर्द्धनइति इम्
राक्षससम्बन्धिनीर्मायामा न अञ्जीः व्यक्तीकरिष्यसि अपि त्ववश्य
मेव अन्जूधत्रिव्यक्तिगतिम्रक्षणे ऊदित्वादेमत्वे अन्जःसेरिन्निति
नित्यमिम् विक्रमं मा न प्रस्तावीः न न प्रस्तुतं करिष्यसि अपि त्वव
श्यमेव सुस्तुधोः सेरितीम् व्रजवदेति त्रिः मायोगे इमोऽभावः
माटीवेति सदा टी च॥४९॥

मा न सावीर्म्महास्त्राणि मा न धावीररिं रणे। वा
नरं मा न संयंसीर्व्रज त्वूर्णमशङ्कितः॥५०॥

मानेत्यादि। रणे महास्त्राणि मा न सावीः मा न प्रसुहि मा
न मुञ्चेत्यर्थः षुप्रसवैश्वर्य्ययोरित्यस्य रूपं अरींश्च मा न धावीः
मा न कम्पय अपि तु भीषयस्वेत्यर्थः पूर्व्ववदिट् वानरं मा न संयं
सीः मा न वधीः यमरमेत्यादिना सगिटौ समुदाङ्भ्योयमइति
तङ् न भवति तच्चाकर्म्मकादिति वर्त्तते यतएवं तस्मादशङ्कित
स्तूर्णं व्रज॥५०॥

मानेत्यादि। महास्त्राणि मा न सावीर्न न सन्धास्यसि अपि तु सन्धानं करिष्यस्येव रणे अरिं शत्रुं मा न धावीर्न न कम्पयिष्यसि अपि त्वश्यमेव वानरं मा न संयंसीः बद्धं न न करिष्यसि अपि त्ववश्यमेव तस्मात्त्वं निर्भयः सन् तूर्णं शीघ्रं व्रज गच्छ धुञ्नसन्धाक्लेद पीडामन्थे धुञ्नकम्पे आभ्यां सुस्तुधो:सेरितीम् यमौउपरतौ संपूर्व्वौबन्धनार्थः यमरमेति इमसनौ ञिन्त्यन्तेत्यादौ अयन्थो त्समायमइति न मं कर्त्तुः फलवत्त्वाभावात् इति रावणोऽवोचदिति पूर्व्वेण सम्बन्धः॥ ५०॥

अनंसीच्चरणौ तस्य मन्दिरादिन्द्रजिद्व्रजन्। गते तस्मिन्नुपारंसीत् संरम्भाद्रक्षसां पतिः॥ ५१॥

अनमित्यादि। एवमुक्तइन्द्रजित् मन्दिरात् व्रजन् गमिष्यन् वर्त्तमानसामीप्ये वर्त्तमानवदिति लट् तस्य पितुश्चरणावनंसीत् नतवान् पूर्व्ववत्सगिटौ गते तस्मिन् रक्षसां पतिः रावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तवान् पूर्व्ववत्सगिटौ रमेरुपाच्चेति तिप् ॥५१॥

अनंसीदित्यादि। एवमुक्तइन्द्रजित् मन्दिरात् व्रजन् गच्छन् तस्य रावणस्य चरणौ अनंसीत् प्रणनाम तस्मिन्निन्द्रजिति गते सति रक्षसां पतीरावणः संरम्भात् क्रोधात् उपारंसीत् निवृत्तः उभयत्र यमरमणमेति इमसनौ॥ ५१॥

इन्द्रजिद्विक्रमाभिज्ञोमन्वानोवानरं जितं। संसिस्मयिषमाणोऽगान्मायां व्यञ्जिजिषुर्द्दिषः॥ ५२॥

इन्द्रेत्यादि। वानरं जितं मन्वानोऽवगच्छन् यतोविक्रमाभिज्ञः अगात् गतवान् द्विषः शत्रून् सिस्मयिषमाणः उपहसितुमिच्छन् पूर्व्ववत्सनइति तङ् मायां व्यञ्जिजिषुः व्यक्तीकर्त्तुमिच्छुः स्मिपूङर ञ्जशासनीतीट् तत्रा ञ्जेर्नञ्जादइति नकारोनलिरुच्यते॥ ५२॥

इन्द्रजिदित्यादि। इन्द्रजित् स्वविक्रमाभिज्ञः अतएव वानरं जितमभिभूतं मन्वानो जानन् द्विषः शत्रोः संसिस्मयिषमाणः उपहसितुमिच्छुः सन् मायां व्यञ्जिजिषुर्व्यक्तीकर्त्तुमिच्छुः सन् अगात् गतः स्मिङ्पूङित्यादिना स्मिङ्ोऽञ्जश्च सनइम् द्विष इति सम्बन्धे षष्ठी॥ ५२॥

जगत्पिपविषुर्व्वायुः कल्पान्तइव दुर्द्धरः। लोकाना शिशिषोस्तुल्यः कृतान्तस्य विपर्य्यये॥ ५३॥

जगत्यादि। कल्पान्ते युगान्ते वायुरिव दुर्धरः जगत्पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः विपर्य्यये विनाशकाले लोकानाशिशिषोः भक्षयितुमिच्छो' कृतान्तस्य तुल्योऽगादिति पूर्व्वेण सम्बन्धः पूर्व्ववदिट्॥ ५३॥

जगदित्यादि। कीदृशः जगत् भुवनं पिपविषुः पवितुमुत्क्षेप्तुमिच्छुः कल्पान्ते वायुरिव दुर्द्धरः धर्त्तुमशक्य' विपर्य्यये जगतां विनाशकाले लोकान् आशिशिषोः व्याप्तुमात्मसात्कर्त्तुमिच्छोः कृतान्तस्य यमस्य तुल्यः ईदृशइन्द्रजिदगादिति पूर्व्वेणान्वयः

पूङ्शोधे अशूङ्व्याप्तिसंहत्योः आभ्यां सनः स्मिङ्पूङित्यादिना इम् आशिशिषोर्भक्षयितुमिच्छोरिति केचित् तन्न साधु सूत्रे अशू इत्यूदनुबन्धनिर्द्देशात्॥ ५३॥

वने चिकरिषोर्वृक्षान् बलं जिगरिषुः कपेः। लसद्विचित्रशस्त्रौघः संग्रामोमूर्त्तिमानिव॥ ५४॥

वनइत्यादि। वने वृक्षांश्चिकरिषोः विक्षेप्तुमिच्छोः कपेर्ब्बलं सामर्थ्यं जिगरिषुः अपनेतुमिच्छुः ऋवर्णान्तत्वात् सनि ग्रहगुहोश्चेति प्रतिषेधे प्राप्ते इच्छनिवेति विकल्पे किरश्चपञ्चभ्यइतीट् किरतेरिटो दीर्घत्वं नेच्छन्तीति न दीर्घः लसन् शोभमानोविविधोवज्रप्रकारः शस्त्राणामायुधानामोघः समूहोयस्य समूर्तिमान् शरीरी संग्रामइव इन्द्रजिद्गादिति पूर्व्वेणान्वयइत्यर्थः॥ ५४॥

वनेइत्यादि। पुनः कीदृशः वने वृक्षान् चिकरिषोर्विक्षेप्तुमिच्छोः कपेर्ब्बलं सामर्थ्यं जिगरिषुर्भक्षयितुं नाशयितुमिच्छुः लसन् दीप्यमानोविचित्रोनानाविधः शस्त्रसमूहोयस्य मूर्त्तः संग्रामइव इन्द्रजिद्गादिति पूर्व्वेण सम्बन्धः कॄशविक्षेपे गॄशनिगरणे आभ्यां सनः पूर्व्ववदिम्॥ ५४॥

रोदिति स्मेव चायाति तस्मिन् पक्षिगणैः शुचा। मुक्तकण्ठं हतान् वृक्षान् बन्धून् बन्धोरिवागमे॥५५॥

रोदीत्यादि। तस्मिन्निन्द्रजिति आयात्यागच्छति सति पक्षिगणः हतान् वृक्षान् कपिनाशितान् शुचा शोकेन मुक्तकण्ठं सशब्दं नामग्राहं रोदिति स्मेव रुदितवानिव नामग्रहणपूर्व्वया रोदन क्रियया व्याप्यमानत्वात् वृक्षाणां कर्म्मसंज्ञा रुदादिभ्य इतीट् बन्धून् बन्धोरिव यथा बन्धोरागमने कश्चित् बन्धून् रोदिति ॥ ५५ ॥

रोदितीत्यादि। तस्मिन्निन्द्रजिति आयाति आगच्छति सति पक्षिगणः शुचा शोकेन मुक्तकण्ठं सशब्दं यथा स्यात्तथा हतान् हनूमता विनाशितान् वृक्षान् रोदिति स्मेव क्रन्दति स्मेव यथा बन्धोरागमे लोको हतान् बन्धून् रोदिति सशब्दरोदनक्रियायां रुदिःसकर्म्मकः रुद्भ्योवृहस्त्वितीम् हनलोगतौवधे श्रादित्वा न्नेम् ॥ ५५ ॥

आश्वसीदिव चायाति तद्वेगपवनाहतं। विचित्रस्त वकोद्भासि वनं लुलितपल्लवं ॥ ५६ ॥

आश्वेत्यादि। तस्मिन्नायाति वनं तद्वेगपवनाहतं सत् आश्व सीदिव सञ्जीवितमिव लब्धि रूपं यतोविचित्रस्तवकोद्भासि लुलि तपल्लवञ्च जातं पूर्व्ववदिट् ॥ ५६ ॥

आश्वसीदित्यादि। तस्मिन्नायाति सति वनञ्च आश्वसीदिव संजीवितमिव श्वसप्रुप्राणने घी रुदाद्यस्नीति ईम् कीदृशं तस्य हनूमतोवेगवायुना आहतं आश्वस्ततामाह विचित्रेण स्तवकेनोद्भासमानं ग्रहादित्वान्नेम् लुलितं मनोहरं पल्लवं यस्य स तथा ॥ ५६ ॥

न प्राणिषि दुराचार मायानामीशिषे न च। नेडिषे
यदि काकुत्स्थं तमूचे वानरो वचः॥ ५७॥

इतीडधिकारः॥

नप्रेत्यादि। वानरस्तमागच्छन्तमिदं वचनमूचे हे दुराचार न प्राणिषि न जीवसि अनचेत्यस्य रूपं पूर्व्ववदिट् अनितेरिति णत्वं नच मायानामीशिषे नेशिता भवसि ईशः सइति इट् अधीगर्थेति कर्म्मणि षष्ठी यदि काकुत्स्थं नेडिषे न स्तौषि ईडजनोर्ध्वे चेत चकारात्से चेतीट्। इतीडधिकारः॥ ५७॥

नप्रेत्यादि। वानरो हनूमान् तमिन्द्रजितं वचऊचे किं वच इत्याह हे दुराचार त्वं काकुत्स्थं यदि नेडिषे न स्तौषि तदा न प्राणिषि न जीवसि न च मायानामीशिषे मायानामीश्वरो न भविष्यसि माया यथेष्टं न च विनियोक्ष्यसे इति वा कर्म्मणि षष्ठी धातूनामनेकार्थत्वात् विनियोगार्थता वर्त्तमानसामीप्येऽपि वर्त्तमानवद्विवक्ष्यतइति न्यायात् सर्व्वत्र की अनप्रुप्राणने रुद्धोऽयइति इम् ईडलङ्स्तुतौ आभ्यां सध्वोरस्येमिति इम्। इतीडधिकारः॥५७॥

ससैन्यश्छादयन् संख्ये प्रावर्त्तिष्ट तमिन्द्रजित्।
शरैः खुरप्रैर्मायाभिः शतशः सर्व्वतोमुखः॥ ५८॥

इदानीं विसर्जनीयस्य सइत्यधिकृत्याह। समेत्यादि। इन्द्रजित् ससैन्यः सबलः तं वानरं सर्व्वतः शरैः क्षुरप्रैः भल्लैः

छादयन् मुहुः चणं मायाभिः शतशोऽनेकधा संख्ये प्रावर्त्तिष्ट प्रवृत्तः लुङि रूपं तत्र ससैन्यश्छादयन् इति विसर्जनीयस्य सइति सत्वं छकारे परे सूत्रं शरि: चुरप्रेरिति सत्वापवादः शर्परेखरि विसर्जनीयस्य विसर्जनीयः विसर्जनीयस्य विकारनिवृत्त्यर्थः माया भिः शतशः सर्व्वतइति वाशरीति विकल्पः विसर्जनीयःसका रोवा ॥ ५८ ॥

अतः परं विसर्ज्जनीयसत्वाधिकारः। सकारपदमादेशमा त्रोपलचणं खमते विसन्ध्यधिकारः। ससैन्यइत्यादि। इन्द्रजित् ससैन्यः सैन्यैः सह शरैः चुरप्रेश्च सर्व्वतोमुहुर्व्वारंवारं तं वानरं छादयन् संख्ये युद्धे मायाभिः शतशः शतं शतं वारान् प्रावर्त्तिष्ट प्रवृत्तः ससैन्यश्छादयन्नित्यत्र वेःसोऽशसन्तेछतेइति विसर्गस्य सः स्तुश्चुभिरिति तालव्यत्वं शरैः चुरप्रेरित्यत्र कखपफयोर्मुन्या वित्यस्य न विषयः अशसन्तइत्यस्यानुवर्त्तनात् विभक्तिव्यत्ययेन अशसन्तयोरिति कखपफयोर्विशेषणात् परे तु शषपरयोःस्यात्रि च न स्यादिति जिह्वामूलीयनिषेधं षसपरयोर्न स्यादित्यनेन उप ध्मानीयनिषेधञ्चाहुः चुरप्रेर्म्मायाभिरित्यत्र रिचोऽवेइति विसर्ग स्य रेफः यद्यपि रवेइति कृते इष्टसिद्धिः स्यात्तथापि इचइति कृतस्य साफल्यमाह देवीदासचक्रवर्त्ती यथा क्वचिदपवादविषये ऽप्युत्सर्गोऽपि प्रवर्त्ततइति न्यायात् अभोभगोऽघोभ्योऽवेलुवित्या दिसूत्रविषये प्रवृत्त्याशङ्कानिरासः तेन हि न्यायेन दधिना पति नेत्यादिसिद्धं मायाभिः शतशइत्यत्र शसिशसित्यस्य विषयः सर्व्व तोमुहुरित्यत्र अतोऽहुव्युरित्यस्य विषयः ॥ ५८ ॥

वानरः कुलशैलाभः प्रसह्यायुधशीकरं। रक्षस्पाशान् यशस्काम्यंस्तमस्कल्पानदुद्रुवत् ॥ ५९ ॥

वानेत्यादि। वानरः कुलशैलाभः संग्रामे स्थिरत्वात् आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्याभिभूय कुःपौः कःपौ चेति जिह्वामूलीयोपध्मानीयौ रक्षस्पाशान् कुत्सितराक्षसान् पाप्येपाशप् स्वार्थिका अपि प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते यशस्काम्यन् आत्मनो यश इच्छन् अच तकारे परतो नश्छव्यप्रशानिति नुत्वं विसर्जनीयसकारौ च पूर्व्वस्यानुनासिकः तमस्कल्पान् ईषदसमाप्ततमसः कुःप्वोरपवादः सोपदादाविति सकारः तत्र पाशकल्पकाम्येष्विति परिगणनं अदुद्रवत् ढौकते स्म णिश्रीत्यादिना चङ् ॥ ५९ ॥

वानरइत्यादि। वानरः कुलपर्व्वततुल्यः क्लेशरहितत्वात् आयुधं शीकरमिव नैरन्तर्य्येण पतनात् प्रसह्य सोढ्वा रक्षस्पाशान् कुत्सितरक्षांसि अदुद्रुवत् ढौकते स्म द्रावितवानित्यर्थः द्रुगतौ टौ ञिश्रिस्रुद्रुकमइति अङ् कीदृशः यशस्काम्यन् आत्मनो यश इच्छतीति सेःकाम्यक्स्वेच्छायामिति काम्यक् ततः शतृः कीदृशान् तमस्कल्पान् अन्धकारतुल्यान् त्यादेर्षोनेइति कल्पः कुत्सितानि रक्षांसि रक्षस्पाशाः पाशःकुत्सायामिति पाशः पुंस्त्वमभिधानात् राजानमिच्छति राजीयतीत्यादिषु नोलुप्फेधावित्यनेनैवेष्टसिद्धौ नलोपार्थं नलोपक्यङेइति कृतं ज्ञापयति लुप्तविभक्तिकस्य विरामाश्रितकार्य्यस्यानित्यमिति तेन रक्षस्पाशादिषु

विसर्गाभावः किम्वा रच्चसाशादयोमनीषादित्वात् सिद्धाः किम्वा सेतुकखपफेवेत्यस्य योगविभागात् वाशब्दस्य व्यवस्थावाचित्वाच पाशकाम्यकल्पेषु विसर्गस्य नित्यं सकारः॥ ५६॥

धनुष्पाशभृतः संख्ये ज्योतिष्कल्पोरुकेशरः। दुधाव निर्नमस्कारान् राचसेन्द्रपुरस्कृतान्॥ ६०॥

धनुरित्यादि। धनुष्पाशभृतः कुत्सितधनुर्धरान् राचसान् ज्योतिष्कल्पोरुकेसरः अग्नितुल्यवृहत्सटोवानरः इणःषइति पाशादिष्विव विसर्जनीयस्य षत्वं दुधाव कम्पितवान् यस्मान्निर्नमस्कारान् अप्रणामान् राचसेन्द्रेणेन्द्रजिता पुरस्कृतान् अग्रतः स्थापितान् नमस्पुरसोर्गत्योरिति विसर्जनीयस्य सकारः इणउत्तरस्य तु विसर्जनीयस्य सएवाधिक्रियते तच नमःशब्दस्य साचात्प्रभृतिषु पाठात् पुरःशब्दस्य पुरोऽव्ययमिति गतिसंज्ञा॥ ६०॥

धनुरित्यादि। वानरः संख्ये युद्धे तान् राचसान् दुधाव कम्पितवान् धूञ्कम्पे ठी कीदृशान् धनुष्पाशभृतः निन्दितधनुर्द्धरान् पूर्ववत्पाशः निर्नमस्कारान् नमस्कारवर्ज्जितान् अप्रशस्तानित्यर्थः राचसेन्द्रपुरस्कृतान् इन्द्रजिताऽग्रतः स्थापितान कीदृशः ज्योतिष्कल्पोरुकेशरः अग्नितुल्यवर्णविपुलसटः पूर्ववत् कल्पः सर्व्वच पूर्व्ववत् विसर्गाभावः वेःसकारोवा तस्येत्वात्परस्य सस्य षत्वमभिनिष्पतन्त्यइत्यत्र व्याख्यातं॥ ६०॥

स्वामिनोनिष्क्रयं गन्तुमाविष्कृतबलः कपिः। रराज समरे शत्रून् घ्नन् दुष्कृतवहिष्कृतः॥ ६१॥

स्वामीत्यादि। स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं शत्रून् घ्नन् विनाशयन् कपिः समरे रराज आविष्कृतबलः प्रकटितसामर्थ्यः दुष्कृतवहिष्कृतः दुष्कृतं पापं वहिःकृतमनेनेति वाहिताग्न्यादिषु द्रष्टव्यं सर्व्वत्र इउदुपधस्य चेत्यनेनाप्रत्ययविसर्जनीयस्य सत्वं॥ ६१॥

स्वामीत्यादि। कपिः समरे संग्रामे शत्रून् घ्नन् विनाशयन् रराज दीप्यते स्म कीदृशः स्वामिनः सुग्रीवस्य निष्क्रयमानृण्यं गन्तुं आविष्कृतं प्रकाशितं बलं सामर्थ्यं येन तादृशः दुष्कृतेन पापेन वहिष्कृतस्त्यक्तः निष्पापइत्यर्थः दुष्कृतं वहिष्कृतं येनेति वा पूर्व्वनिपातस्यानियमात् क्वचित् क्तान्तस्य परनिपातः आहिताग्न्यादेर्व्वेति परः दुर्न्निराविर्व्वहिःप्रादुश्चतुरांषःकखपफेइति परसूत्रदर्शनात् निष्क्रयादिषु षेतुकखपफेवेत्यस्य वाशब्दस्य व्यवस्थावाचित्वात् नित्यं सकारोबोध्यः विकल्पेऽपि न क्षतिः दुःखं दुष्खञ्चेति द्विरूपदर्शनात् मूर्द्धन्यषत्वं पूर्व्ववत्॥ ६१॥

चतुष्काष्ठं क्षिपन् वृक्षान् तिरस्कुर्व्वन्रीक्षणे। तिरस्कृतदिगाभोगोददृशे वहुधा भ्रमन्॥ ६२॥

चतुरित्यादि। चतस्रः काष्ठा दिशो यस्मिन् क्षेपणे इति क्रिया विशेषणं पूर्व्ववत् षत्वं चतसृषु दिक्षु वृक्षान् रणे भ्रमन् एकोऽपि बहुधा ददृशे दृष्टः कपिः क्षिपन्निति तौदादिकः अरींस्तिरस्कुर्व्वन् अभिभवन् तिरस्कृतदिगाभोगः अपनीतदिग्विस्तारः तिरसोऽन्यतरस्यामिति पक्षे षत्वं ॥ ६२ ॥

चतुरित्यादि। स एकः कपी रणे भ्रमन् बहुधा ददृशे जनैरित्यर्थात् किङ्कुर्व्वन् चतुष्काष्ठं वृक्षान् क्षिपन् चतस्रः काष्ठा दिश आधारत्वेन यस्मिन् क्षेपणे क्रियाविशेषणमिदं चतसृषु दिक्षु वृक्षान् क्षिपन्नित्यर्थः अरीन् शत्रून् तिरस्कुर्व्वन् अभिभवन् तिरस्कृतदिगाभोगः आच्छादितदिग्विस्तारः पूर्व्ववद्विभाषया विसर्गस्य सकारः ॥ ६२ ॥

द्विष्कुर्व्वतां चतुष्कुर्व्वन्नभिघातं नगैर्द्विषां। बहिष्करिष्यन् संग्रामाद्रिपून् ज्वलनपिङ्गलः ॥ ६३ ॥

द्विष्कुर्व्वेत्यादि। असौ कपिराटीदिति वक्ष्यमाणेन सम्बन्धः कीदृशः द्विष्कुर्व्वतां द्वौ वारावभिघातं कुर्व्वतां द्विषां चतुष्कुर्व्वन् चतुरो वारान् नगैर्वृक्षैरभिघातं कुर्व्वन् द्वित्रिचतुरिति सुजोऽर्थ इति विसर्जनीयस्य वा षत्वं अरीन् संग्रामाद्बहिष्करिष्यन् अपनेष्यामीति इसुसोः सामर्थ्य इति विसर्जनीयस्य षत्वं पक्षे सामर्थ्यं चाच ह्यपेक्षा नैकार्थीभावः बहिष्करिष्यन्निति द्वयोः परस्परव्यपेक्षत्वात् ॥ ६३ ॥

द्विरित्यादि। असौ कपिराटीदित्ययिमश्लोकेनान्वयः किङ्कुर्व्वन् द्वौ वारौ अभिघातं कुर्व्वतां द्विषां नगैः पर्व्वतैश्चतुरोवारान् अभिघातं कुर्व्वन् द्विस्त्रिश्चतुःकृत्वोऽर्थे इति सूत्रेण विभाषया कस्कादित्वाद्रूपद्वयमिति परः खमते हस्तेपाणावित्यादिना साचाद्दादित्वात् वा समासः। समासे सेतुकखेति रूपद्वयं निर्व्विरोधं एवमसमासेऽपि कखपफेवित्यस्य योगविभागः कार्य्यः समासपक्षे षत्वं व्याख्यातमेव असमासेऽपि क्त्वादित्यस्य योगविभागात् षत्वं मनीषादित्वाद्वा संग्रामात् अरीन् शत्रून् वहिष्करिष्यन् पूर्व्ववत् वेशः षत्वञ्च ज्वलनवत् वह्निवत् पिङ्गलः॥ ६३॥

ज्योतिष्कुर्व्वन्निवैकोऽसावाटीत् संख्ये परार्द्धवत्।
तमनायुष्करं प्राप शक्रशत्रुर्द्धनुष्करः॥ ६४॥

ज्योतिरित्यादि। एकोऽपि ज्वलनपिङ्गलः ज्योतिष्कुर्व्वन्निव अग्निं दीपयन्निव पूर्व्ववत्पक्षे विसर्जनीयस्य षः परार्द्धवत् दिव इव परार्द्धोद्युलोकः अह्माण्डसम्बन्धिनऊर्ध्वभागस्योत्कृष्टत्वात् तच्च भवद्दति परावराधमेति यत् संख्ये संग्रामे आटीत् परिचक्राम इटइटीति सिचोलोपः तं वानरमनायुष्करं प्राणापहारिणं शक्रशत्रुरिन्द्रजित् प्राप प्राप्तवान् धनुष्करः धनुः करे यस्येति नित्यं समासेत्यादिना षत्वं॥ ६४॥

ज्योतिरित्यादि। एकोऽसौ कपिः संख्ये परार्द्धवत् अत्युत्कृष्टसंख्याविशेषावच्छिन्नवत् ज्योतिष्कुर्व्वन् आटीत् परिचक्राम

परार्द्धवत् दिव्यवदिति जयमङ्गला तं कपिं शक्रशत्रुरिन्द्रजित् प्राप कीदृशं न आयुः करोतीत्यनायुष्करं कीदृशः धनुः करे यस्य स तथा पूर्व्ववद्देःषः षत्वञ्च इसुसन्तयोः कखपफयोर्नित्यमितिपरः ॥ ६४ ॥

अस्यन्नरुष्करान् बाणान् ज्योतिष्करसमद्युतिः।
यशस्करोयशस्कामं कपिं बाणैरताडयत् ॥ ६५ ॥

अस्यन्नित्यादि। बाणानरुष्करान् व्रणजनकान् दिवाविभेत्यादिना टः अस्यन् क्षिपन् ज्योतिष्करसमद्युतिः ज्योतिष्करणशीलः आदित्यः क्षञोहेलित्यादिना टः तेन तुल्य इत्यर्थः पूर्व्ववत् षत्वं यशस्करोयशोजननशीलः इन्द्रजिद्यशस्कामं यशसि कामोऽस्येति तं कपिं बाणैरवाकिरत् अताडयत् अतः कृकमीत्यादिना न व्यय विसर्जनीयस्य सत्वं ॥ ६५ ॥

अस्यन्नित्यादि। इन्द्रजिदरुष्करान् व्रणजनकान् बाणान् अस्यन् क्षिपन् बाणैः कपिमताडयत् ज्योतिष्करस्य सूर्य्यस्य समा द्युतिर्यस्य यशस्करोयशोजननशीलः कीदृशं कपि यशस्कामं यशसि कामोयस्य सर्व्वच पूर्व्ववद्देःष इत्वात्षत्वञ्च अरुर्ज्योतिर्यशस्य करोतीति स्वकुष्टः ॥ ६५ ॥

चकाराधरणं नासौ चरन् वियति मारुतिः। मर्म्मा विद्भिस्तमस्काण्डैर्व्विध्यमानोऽप्यनेकधा ॥ ६६ ॥

इति सत्वाधिकारः।

चकारेत्यादि। असौ मारुतिर्वियति चरन् अधस्पदं पृथिव्यां पदं न चकार अधस्पदमिति मयूरव्यंसकादित्वात्सः कस्कादिषु चेति षत्वं मर्म्माणि विध्यन्तीति क्विप् नहिवृतीत्यादिना पूर्व्वपदस्य दीर्घत्वं। इति षत्वसत्वाधिकारः॥ ६६॥

चकारेत्यादि। असौ मारुतिर्हनूमान् वियति आकाशे चरन् मर्म्माणि विध्यद्भिः कालायसघटितत्वात् तमस्तुल्यैः काण्डैः शरैरनेकधाविध्यमानस्ताड्यमानोऽपि अधस्पदं पृथिव्यां पदं न चकार पूर्व्ववद्वेः सः अधःशिरसोःपदे तमसस्तु काण्डे नित्यं विसर्गस्य सकारइति परः। इति विसर्ज्जनीयसत्वाधिकारः॥ ६६॥

पुरुहूतद्विषोधूर्षु युक्तानत्तस्य वाजिनः। आयूंषि त्वक्षु निर्भिद्य प्राभञ्जनिरमोचयत्॥ ६७॥

इतः प्रभृति अपदान्तस्य मूर्द्धन्यइत्यधिकृत्याह। पुरुहूतेत्यादि। पुरुहूतद्विषइन्द्रजितः सम्बन्धिनोयानस्य रथस्य धूर्षु युक्तान् वाजिनः त्वक्षु चर्म्मसु निर्भिद्य प्राभञ्जनिर्मारुतिरायूंषि जीवितानि अमोचयत् त्याजितवान् धूर्षु त्वक्षिति आदेशप्रत्यययोरिति षः प्रत्ययसकारत्वात् तच हि इण्कोरिति वर्त्तते परेण चणकारेण प्रत्याहारः आयूंषीति नुम्विसर्जनीयेत्यादिना सहेःसाडस्सः इति छन्दोविषयत्वान्नोदाहृतं ततः छन्दसि सहइति ण्विप्रत्ययस्य विधानात् एवञ्च पृतनाषाड्विषइति पाठान्तरमयुक्तं॥६७॥

अथ मूर्द्धन्यषत्वाधिकारः। पुरुहूतेत्यादि। प्रभञ्जनस्यापत्यं हनूमान् पुरुहूतद्विषः शक्रशत्रोर्मेघनादस्य यानस्य रथस्य धूर्षु

भारेषु युक्तान् वाजिनोऽश्वान् त्वचु चर्म्मसु निर्भिद्य आयूंषि अमी चयत् त्याजयामास घोऽन्नोऽरिरिति स्वत्रे उपसर्ज्जनोभूतार्थोऽपि शब्दार्थादयोगृह्यन्ते इति तु प्राप्तयर्थयोर्निवहो: प्रतिषेधेन ज्ञापितं तेन वाजिनां प्रयोज्यानां कर्म्मत्वं अत्र हि मुचिर्मुक्तिपूर्व्विकायां गतौ वर्त्तते अतएवामीचयत् मोचनेन भवान्तरमगमयदित्यर्थः किलादित्यादिना धूर्व्विति अत्र रेफात् आयूंषीत्यत्र नुविव्यवधानेऽपि त्वच्चित्यत्र ककारात् सस्य षत्वं पुरुह्नतेत्यत्र पृतनाषाड़िति क्वचित्पाठः ॥ ६७ ॥

सुषुपुस्ते यदा भूमौ रावणिः सारथिं तदा। आहर्त्तुमन्यानशिषत् प्रोषितत्रासकर्कशः ॥ ६८ ॥

सुष्वित्यादि। ते यदा भूमौ सुषुपुः निपेतुः आदेशसकारत्वात्पूर्व्ववत् षत्वं तदा रावणिरन्यानश्वानाहर्त्तुमानेतुं सारथिमशिषत् आदिष्टवान् सर्त्तिशास्तीत्यङ् शासइदुङ्हलोरिति इकारः शासिवसीति षत्वं प्रोषितत्रासः प्रोषिताद्रामादुपगतभयः कर्कशश्च रौद्रः प्रोषितइति यजादित्वात्सम्प्रसारणं षत्वं पूर्व्ववत् ॥ ६८ ॥

सुषुपुरित्यादि। ते वाजिनोयदा भूमौ सुषुपुः निषेदुः ञिष्वप शये भ्वाद्यादिष्णइति मूर्द्धन्यस्य दन्त्यत्वं ततः किलादिति सस्य ह्नतत्वात् षत्वं तदा तस्मिन् काले रावणस्यापत्यमिन्द्रजित् अन्यानश्वानाहर्त्तुं सारथिं अशिषत् आदिष्टवान् कीदृशः प्रोषितोऽपग

तस्यासीयस्येति वहुव्रीहिः सचासी कर्कशश्चेति पश्चात्कर्मधारयः शेषितचास्मिन कर्कशोवा शास्तेः शाशलिद्युदिति ङः शासुङिति इत् वसेः चुधवसेति क्तस्य इम् ग्रहस्वपाद्योरिति जिः क्तिसादि त्यादौ शासवसेति षत्वं ॥ ६८ ॥

प्रतुष्टुषुः पुनर्युद्धमासिषञ्जयिषुर्भयं । आतस्थौ रथमात्मीयानुत्सिसाहयिषन्निव ॥ ६९ ॥

प्रत्वित्यादि। अश्वा आनीता इति पुनरपि युद्धं प्रतुष्टुषुः प्रस्तो तुमारब्धुमिच्छुः सन् अज्झनगमां सनीति दीर्घः सनाशंसभिच्छउः नलोकेति षष्ठीप्रतिषेधः रथमातस्थौ आरूढवान् भयमासिषञ्ज यिषुः संश्लेषयितुमिच्छुः हनूमता तत्र स्तौतेः सनि षत्वभूते सञ्जेश्च स्तौतिण्योरिति अभ्यासादुत्तरस्य षत्वं आत्मीयान् भृत्यानुत्सि साहयिषन्निव उत्साहयितुमिच्छन्निव युध्यध्वमिति स्तौतीत्यादिना षत्वे प्राप्ते सःस्विदित्यादिना षकारस्य सत्वं ॥ ६९ ॥

प्रतुष्टुषुरित्यादि। इन्द्रजित् पुनः सज्जीभूतं रथमातस्थौ आश्रितवान् कीदृशः युद्धं प्रतुष्टुषुः प्रस्तोतुमारब्धुमिच्छुः भयं आसिषञ्जयिषुः हनूमतोभयमासञ्जयितुं संश्लेषयितुं इच्छुः आत्मी यान् अनुचरान् उत्सिसाहयिसन्निव उत्साहयितुमिच्छन्निव ञिस्वोःस्वेरित्यादिना षत्वभूते सनि स्वेः षत्वं तत्रैव सहवर्ज्जनात् उत्सिसाहयिषन्नित्यत्र न षत्वं ॥ ६९ ॥

बलान्यभिषिषिचन्तं तरुभिः कपिवारिदं। विजिगीषुः पुनश्चक्रे व्यूहं दुर्ज्जयमिन्द्रजित्॥ ७०॥

बलेत्यादि। कपिवारिदं कपिं वारिदमिव बलान्यभिषिषिचन्तं तरुभिः अभिषेक्तुं छादयितुमिच्छन्तं स्थादिष्वभ्यासेत्यादिना तु सकारस्याभ्याससकारस्य च षत्वं तमेवंविधं कपिं विजिगीषुर्विजेतुमिच्छुः इन्द्रजित् सन्लिटोर्ज्जेरिति कुत्वं पुनर्व्यूहं बलसन्निवेशं दुर्जयाख्यं चक्रे हस्त्यश्वादिसैनिकानां मण्डलस्थित्या विरच्यते॥ ७०॥

बलानीत्यादि। तरुभिर्बलानि अभिषिषिचन्तं छादयितुमिच्छन्तं अतएव कपिं वारिदमिव जेतुमिच्छुरिन्द्रजित् पुनर्व्यूहं बलविन्यासं चक्रे दुर्ज्जयं जेतुमशक्यं व्यूहस्य कपेर्व्वा विशेषणं अभिपूर्व्वसिचः सनः षत्वे ञिस्वोःखेरिति नियमेन क्विलादित्यादिना गीकइति इत्यादिना च प्राप्तं षत्वं वाध्यते प्रकृतेर्व्वाधितत्वात् गीकइत्यादिना खेःसकारस्यापि न षत्वमिति केचित् ञिस्वोःखेरित्यनेन खिनिमित्तं षत्वं वाध्यते तेन प्रकृतेः सस्य न षत्वं खेस्तु गीकइत्यादिना षत्वं भवत्येवेति केचित् वस्तुतस्तु षत्वभूते सनि खिनिमित्तस्यैव षस्य निषेधः नतु गिनिमित्तस्य तेनोभयत्र गीकइति षत्वं॥ ७०॥

अभिष्यन्तः कपिं क्रोधादभ्यषिच्चन्निवात्मनः। संप्रहारसमुद्भूतैरक्तैः कोष्णैररुश्च्युतैः॥ ७१॥

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभियन्तः अन्तं नयन्तः षोऽन्तकर्मणीत्यस्य शतरि ओतःश्यनीत्योकारलोपः उपसर्गादिति षत्वं सम्प्रहारसम्भूतैः रक्तैः कोष्णैरीषदुष्णैः अरुःस्रुतैः व्रणान्निर्गतैः कपिमभ्यषिञ्चन्निव अभिषिक्तवन्त इव खङ्गि रूपं प्राक्सितादड्व्यवायेऽपीति षत्वं॥ ७१॥

अभीत्यादि। राक्षसाः क्रोधादात्मनोऽभियन्तोऽन्तं नयन्तः सम्यक् प्रहारजातैः ईषदुष्णैर्व्रणच्युतैः रक्तैः कपिं अभ्यषिञ्चन्निव अभिषिक्तवन्त इव षेचनार्थे शब्दः अभिषेकसिचोर्णीकःस्तुस्तुभषो इत्यादिना षत्वं॥ ७१॥

संग्रामे तानधिष्ठास्यन्निषद्य पुरतोरणं। अविषीदन्नवष्टब्धान् व्यष्टभ्नान्नरविष्वणान्॥ ७२॥

संग्रामइत्यादि। ये प्राणिनः अभिषिञ्चन्ति ताननरविष्वणान् राक्षसान् संग्रामे अधिष्ठास्यन् अस्वतन्त्रीकरिष्यन् कपिः उपसर्गादिति षत्वं पुरतोरणं पुरद्वारं व्यष्टभ्नात् आश्रितवान् निषद्य तत्रैव पुरतोरणे स्थित्वा प्राणिनोमाप्रविक्षुरिति अविषीदन् विषादमगच्छन् निषद्य विषीदन्निति सदिरप्रतेरिति षत्वं अवष्टब्धान् अविदूरान् अवाच्चालम्बनाविदूर्य्ययोरिति षत्वं व्यष्टभ्नादिति अड्व्यवायेस्तम्भेरिति षत्वं स्तम्भुस्तुम्भुइत्यादिना श्नाप्रत्ययः सशब्दायामभ्यवहारक्रियायां स्वनतिर्वर्त्तते नराणां विष्वणइति सः नरान् सशब्दमभ्यवहरन्तइत्यर्थः वेश्च स्वनोसभोजनइति षत्वं॥ ७२॥

संग्रामइत्यादि । हनूमान् संग्रामे निषद्य स्थित्वा अविषीदन् विषखो न भवन् तान् राचसान् अधिष्ठास्यन् अभिभविष्यन् पुरतोरणं पुरीवहिर्द्वारं व्यष्टभ्नात् आक्रान्तवान् पुरतोरण मधिष्ठास्यन् तान् व्यष्टभ्नादिति वा कीदृशान् अवष्टब्धान् निकट स्थान् ऊर्ज्जितान् वा नरविष्वणान् मनुष्यं भुञ्जानान् अधिस्थानि विषदविस्तभ्नाद्यर्थविखनां गीकइत्यादिना षत्वं अवष्टब्धानिति गीकइत्यादौ अवस्तनेत्यस्य योगविभागार्थात् क्वचिदन्यार्थादन्य त्रापि षत्वं मनीषादित्वाद्वा अत्रात्स्तम्भैरूर्ज्जित्याश्रयनिकटभोजनेष्विति परः ॥ ७२ ॥

विषद्य राचसाः क्रुद्धाः शस्त्रजालमवाकिरन् । यन्न व्यसहतेन्द्रोऽपि कपिः पर्य्यषहिष्ट तत् ॥ ७३ ॥

विषेत्यादि । विषद्य सोढ्वा कपिचेष्टितमित्यर्थात् सात्पदाद्योरिति प्रतिषेधे प्राप्ते परिनिविभ्यइति षत्वं राचसाः क्रुद्धाः शस्त्र जालमवाकिरन् विचिप्तवन्तः लङि रूपं यच्च शस्त्रजालमिन्द्रोऽपि न व्यषहत न सोढवान्सः लङि रूपं तत्कपिः पर्य्यसहिष्ट लुङि रूपं सहेःसिवादीनामित्यादिना विभाषा षत्वं॥ ७३ ॥

विषद्येत्यादि । राचसाविषद्य सोढ्वा हनूमतः प्रहारमित्यर्थात् क्रुद्धाः सन्तः शस्त्रजालं शस्त्रसमूहं नैरन्तर्य्येण सर्व्वतोविचेपात् जालमिव अवाकिरन् विचिप्तवन्तः ध्यां रूपं यत्शस्त्रजालं

इन्द्रोऽपि न व्यसहत न विसोढवान् कपिस्तत् शस्त्रजालं पर्य्यस हिष्ट परिसोढवान् स्वां रूपं विषह्वेत्यत्र शीकइत्यादिना षत्वं व्यसहतेत्यत्र पर्य्यसहिष्टेत्यत्र च निविपरिसन्जेत्यादिना पाक्षिक षत्वं॥ ७३॥

विष्यन्दमानरुधिरोरक्तविस्यन्दपाटलान्। विष्क न्तॄन् परिघेणाहन्नविस्कन्ता कपिर्द्विषः॥ ७४॥

विष्येत्यादि। विष्यन्दमानरुधिरः क्षरद्रक्तः कपिः परिघेणा हन् ताडितवान् द्विषः शत्रून् रक्तविस्यन्दपाटलान् रक्तस्रुतिलो हितान् अनुपर्य्यभिनिविभ्यः स्यन्दतेरिति विभाषापत्वं रक्तस्या प्राणित्वात् विष्कन्तॄन् विविधं स्कन्तुं गन्तुं शीलमेषामिति तृन् अवि स्कन्ता कपिः अगमनशीलः स्थानशीलइत्यर्थः वेःस्कन्देरनिष्ठा यामिति विभाषा षत्वं॥ ७४॥

विष्येत्यादि। कपिर्द्विषः शत्रून् परिघेण अहन् ताडितवान् कीदृशः विष्यन्दमानरुधिरः क्षरद्रक्तः अविस्कन्ता अविचलन शीलः कीदृशान् रक्तविस्यन्दपाटलान् रक्तस्रुतिलोहितान् विष्कन्तॄन् विविधगतिशीलान् स्यन्दृङ्स्रुतौ स्कन्दिरोशोषणे गत्यां अनयोः सस्यविस्कभानिर्व्विखित्यादिना पक्षे पत्वं स्यन्देः कर्त्तृ रक्तं तेनाप्राणिकर्त्तृकत्वं स्कन्देस्तृन् झपझसेरिति दस्य तः सवर्गात् सवर्गस्य सवर्गेलुक्वेति सूत्रेण पक्षे दलोपमाङः परे स्वमते मनीषादित्वात्तद्रूपमपि॥ ७४॥

मेघनादः परिष्कन्दन् परिस्कन्दन्तमाश्वरिं। अब
ध्नादपरिस्कन्दं ब्रह्मपाशेन विस्फुरन्॥ ७५॥

मेघेत्यादि। मेघनाद इन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तम्परिभ्रमन्तमरिं कपिं ब्रह्मपाशेन ब्रह्मणा दत्तेन पाशेनशीघ्रमबध्नात् बद्धवान् लङि श्नाप्रत्यये रूपं परेश्चेति वा षत्वं अपरिस्कन्दं अप्राच्यभरतत्वात् तेन परिस्कन्दः प्राच्यभरते ष्विति निपातनं विस्फुरन् द्वेषादुद्गच्छन्नित्यर्थः स्फुरतिस्फुलत्यो रिति विभाषाषत्वं॥ ७५॥

मेघेत्यादि। मेघनादइन्द्रजित् परिष्कन्दन् परितोभ्रमन् परिस्कन्दन्तं परितोभ्रमन्तमरिं हनूमन्तं ब्रह्मपाशेन आशु शीघ्रं अपरिस्कन्दं निश्चलं यथा स्यात्तथा अबध्नात् बद्धवान् न विद्यते परिस्कन्दश्चलनं यस्माद्बन्धनात् क्रियाविशेषणं अरेर्विशेषणमिति केचित् विस्फुरन् कोपात् हर्षाद्वा कम्पमानः परिस्कन्द विस्फुरोः सस्य विस्कम्भानिर्व्वेत्यादिना विभाषया षत्वं॥ ७५॥

विस्फुलद्भिर्गृहीतोऽसौ निष्फुलः पुरुषाशनैः। विष्क
म्भितुं समर्थोऽपि नाचलद्ब्रह्मगौरवात्॥ ७६॥

विष्फुलेत्यादि। असौ कपिः पुरुषाशनैः राक्षसैः विस्फुलद्भिः हर्षाच्चलद्भिर्गृहीतः निष्फुलः सतेजाः निस्फुलेति विभाषा षत्वं

विष्कम्भितुं व्यापारितुं समर्थोऽपि ब्रह्मगौरवान्नाचलत् न चलितः माभून्मोघोब्राह्मः पाश इति वेष्कम्भातेरिति षत्वं ॥ ७६ ॥

विष्फुलेत्यादि। असौ कपिर्विष्फुलद्भिर्हर्षोच्चलद्भिः पुरुषाशनैः राक्षसैः गृहीतोऽपि निष्फुलो निष्कम्पः विष्कम्भितुं व्यावर्त्तितुं समर्थोऽपि ब्रह्मगौरवात् नाचलत् न चलितवान् विस्कम्भेत्यादिना विष्कम्भः षत्वं नित्यं स्फुरस्फुलोस्तु विभाषितं ॥ ७६ ॥

क्षपीढ्वं भर्त्तुरानन्दं मा न प्रोढ्वं द्रुतं वियत्। वानरं नेतुमित्युच्चैरिन्द्रजित् प्रावदत् स्वकान् ॥ ७७ ॥

क्षपीत्यादि। भर्तुः रावणस्य आनन्दं क्षपीढ्व कुरुध्वं लिङि रूपं अतोवानरं द्रुतं नेतुं वियदाकाशं मा न प्रोढ्वं मानोत्पतिष्ट माङि लुङ् इणः षीध्वमिति धकारस्य मूर्द्धन्यढकारः इत्येवमुच्चैरिन्द्रजित् स्वकान् भृत्यान् प्रावदत् वदेर्लङि रूपं ॥ ७७ ॥

क्षपीढ्वमित्यादि। यूयं भर्त्तूरावणस्य आनन्दं क्षपीढ्वं कुरुध्वं क्ष्यारूपं इगुङुर्मढीति कित्त्वान्न गुणः टीठीढीधोढिच इति धस्य ढत्वं किखादिति षः वानरं नेतुं द्रुतं यूयं वियदाकाशं मा न प्रोढ्वं न न गच्छत अपि तु प्रोढ्वं प्रुप्लुङ्चसर्पणे मायोगे टी सिः गुणः धेसलोपेवेति पक्षे सिलोपः टीठीढीधोढिच इति धस्य ढत्वं इत्युक्तं इन्द्रजित् स्वकान् आत्मीयान् उच्चैर्महता ध्वनिना प्रावदत् प्रोक्तवान् ॥ ७७ ॥

गतमङ्गुलिषङ्गं त्वां भीरुष्ठानादिहागतं। खादिष्यामइति प्रोचुर्नयन्तोमारुतिं द्विषः॥ ७८॥

गतमित्यादि। अङ्गुलीनां सङ्गः अङ्गुलीषङ्गः तं गतं प्राप्तं हस्तप्राप्तमित्यर्थः समासेऽङ्गुलेःसङ्गइति षत्वं भीरोः कातरस्य यत्स्थानं तस्माद्भीरुष्ठानादिहागतं भीरोस्थानमिति षत्वं खादिष्यामइति प्रोचुः द्विषोराक्षसा मारुतिं नयन्तोनेष्यन्तः वर्त्तमानसामीप्ये भविष्यति लट्॥ ७८॥

गतमित्यादि। मारुतिं नयन्तोराक्षसाइति प्रोचुः उक्तवन्तः किमित्याह त्वां वयं खादिष्यामः कीदृशं त्वां अङ्गुलेः सङ्गं गतं प्राप्तं हस्तप्राप्तमित्यर्थः भीरोरामस्य स्थानादिह लङ्कायामागतं समासेऽङ्गुलेः सङ्गस्य भीरोस्थानस्य चेति षत्वमिति परःक्षमते क्विलादित्यस्य योगविभागात् ग्रासवसघसषाढाश्चेत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादन्येषामपीत्यर्थाद्वा मनीषादिलाद्वा॥ ७८॥

अग्निष्टोमादिसंस्थेषु ज्योतिष्टोमादिषु द्विजान्। योऽरक्षीत्तस्य दूतोऽयं मानुषस्येति चावदन्॥ ७९॥

अग्नीत्यादि। अग्निष्टोमादिसंस्थेषु सदृशेषु ज्योतिष्टोमादिषु योद्विजानरक्षीत् तस्य मानुषस्यायं दूत इतिचावदन् नयन्तो द्विषः अग्नेस्तुत्स्तोमसोमाः ज्योतिरायुषस्तोमइति षत्वं॥ ७९॥

अग्नीत्यादि। अग्निष्टोमादिसञ्ज्ञेषु ज्योतिष्टोमादिषु यज्ञेषु योद्विजान् अरचीत् आदिशब्दादाजपेयादेर्ग्रहणं आयुर्ज्योतिरग्निभ्यः स्तोमस्येति षत्वमिति परः स्वमते मनीषादित्वात् तस्य मानुषस्यायं दूतइतिच ते द्विषोऽवदन्॥ ७९॥

नासां मातृष्वसेय्याश्च रावणस्य लुलाव यः। मातुः ष्वसुश्च तनयान् खरादीन् विजघान यः॥ ८०॥

नासामित्यादि। रावणस्य या मातुः स्वसा भगिनी सा मातृष्वसा मातृपितृभ्यामिति षत्वं तस्याअपत्यं मातृष्वसेयी मातृष्वसुश्चेतिठगन्तलोपौ तस्यायोनासां लुलाव मातुःस्वसुश्च तनयान् खरादीन्निजघान मातृपितृभ्यामन्यतरस्यामिति षत्वाभावपक्षे विभाषास्वसृपत्योरिति षष्ठ्या अलुक्॥ ८०॥

नासामित्यादि। योरावणस्य मातृष्वसेय्यामातृष्वसुर्दुहितुः शूर्पणखायानासां लुलाव छिन्नवान् मातृस्वसृशब्दादव्यादित्वात् ष्णेयः मनीषादित्वादन्तलोपः आदिसस्य षत्वञ्च मातृपितृभ्यां स्वसुरिति परः योमातुः स्वसुश्च मातुर्भगिन्याश्च तनयान् पुत्रान् खरादीन् निजघान तस्य दूतोऽयमिति सम्बन्धः स्वसुर्वा मातृपितृभ्यामिति विभाषया षत्वमिति परः स्वमते मनीषादित्वात्॥ ८०॥

प्रादुःषन्ति न संचासायस्य रक्षःसमागमे। तस्य क्षत्रियदुःषूतेरयं प्रणिधिरागतः॥ ८१॥

प्रादुरित्यादि । यस्य रक्षःसमागमे सन्त्रासाः भयानि न प्रादुःषन्ति न प्रादुर्भवन्ति उपसर्गप्रादुर्भ्यामित्यादिना दुःशब्दादुत्तरस्यास्ति सकारस्य श्नसोरल्लोपइत्यल्लोपे कृते षत्वं प्रादुःसकारस्य च ष्टुत्वं तस्य क्षत्रियदुःषूतिः दुष्पुत्रस्यायं प्रणिधिरागत इति चावदन् नयन्तः स्वयतइति स्वतिः दुर्निंदायामिति स्वतेः सकारस्य सुविनिर्दुर्भ्यइति षत्वं॥ ८१॥

प्रादुरित्यादि । रक्षसां समागमे यस्य सन्त्रासान प्रादुःषन्ति न प्रादुर्भवन्ति प्रादुर्गीकइति षत्वं तस्य क्षत्रियदुःषूतेः प्रणिधिश्चरोऽयमागतः विनिसुदुर्भ्यः स्वतिसमसुपामिति षत्वमिति परः स्वमतं मनीषादित्वात्॥ ८१॥

दृष्ट्वा सुषुप्तं राजेन्द्रं पापोऽयं विषमाशयः। चारकर्म्मणि निष्णातः प्रविष्टः प्रमदावनं॥ ८२॥

दृष्टेत्यादि । राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः सुषुप्तं गाढनिद्रं वच्यादिना सम्प्रसारणं पापोऽयं विषमाशयः सुपीत्यादिना षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नातेःकौशलइति षत्वं॥ ८२॥

दृष्टेत्यादि । अयं पापोदुराचारो राजेन्द्रं रावणं दृष्ट्वा प्रमदावनं प्रविष्टः कीदृशं राजेन्द्रं सुषुप्तं गाढनिद्रितं विस्कम्भानिर्व्विसुनिर्दुःस्वपइति षत्वं कीदृशः विषमाशयः कुटिलहृदयः विषमेत्यच मनीषादित्वात् षत्वं चारकर्म्मणि निष्णातः कुशलः निनदीभ्यांस्नः कौशलेइति षत्वमिति परः स्वमते मनीषादित्वात्॥८२॥

कुलकं। सुप्रतिष्णातसूत्राणां कपिष्ठलसमत्विषां। स्थितां वृत्ते द्विजातीनां रात्रावैक्षत मैथिलीं॥ ८३॥

सुप्रेत्यादि। येषां द्विजातीनां सुप्रतिष्णातानि ग्रन्थतोऽर्थ तश्च निश्चितानि सूत्राणि तेषां सुप्रतिष्णातसूत्राणां सूत्रं प्रतिष्णा तमिति निपातनं कपिष्ठलसमत्विषां कपिष्ठलोनामद्विजर्षभो गोत्र प्रवर्त्तकः कपिष्ठलोगोत्रइति साधुः तत्तुल्यतेजसां द्विजातीनां वृत्ते चरिते स्थितां मैथिलीं ऐक्षत॥ ८३॥

सुप्रेत्यादि। अयं रात्रौ द्विजातीनां वृत्ते स्थितां मैथिलीं ऐक्षत दृष्टवान् ध्यां रूपं कीदृशानां सुप्रतिष्णातं ग्रन्थतोऽर्थतश्च विशुद्धं गोभिलादिसूत्रं येषां मनीषादित्वात् सूत्रे प्रतिस्नातस्य षत्वं कपिष्ठलसमत्विषां कपिष्ठलाख्यस्य ऋषेः समा त्विट् येषां म नीषादित्वात् गोत्रे कपेः स्थलस्य सस्य षत्वं॥ ८३॥

सर्व्वनारीगुणैः प्रष्ठां विष्टरस्थां गविष्ठिरां। शया नां कुष्ठले तारां दिविष्ठामिव निर्म्मलां॥ ८४॥

कीदृशीमित्याह सर्व्वेत्यादि। यावन्तो नारीगुणाः तैः प्रष्ठां अग्रगामिनीं प्रष्ठोग्रगामिनीति साधुः विष्टरस्थामासनस्थां वृचा सनयोर्व्विष्टरइति साधुः गविष्ठिरां वाचिस्थिरां गवियुधिभ्यामिति षत्वं अस्मादेव वचनात् सप्तम्या अलुक् कुष्ठले शयानां कौ स्थले

भूतले शुद्धे विकुशमित्यादिना षत्वं दिविष्ठां दिवि तिष्ठतीति सुपि स्थ इति कः तत्पुरुषेकृतिवहुलमिति सप्तम्या अलुक् गगणस्थां तारामिव निर्म्मलां अम्बाम्बेत्यादिना षत्वं ॥ ८४ ॥

सर्व्वेत्यादि। मैथिलीं कीदृशीं सर्व्वनारीगुणैः प्रष्ठां यावन्तो नारीगुणास्तैरग्रगामिनीं मनीषादित्वात् प्रात्स्थोऽग्रगे षत्वं विष्टरस्थां आसनस्थां मनीषादित्वाद्वृक्षासनयोर्विष्टरइति रूपसिद्धिः गविष्ठिरां वाचिस्थिरां सप्तमीतत्पुरुषः अभिधानान्न ङेर्लोपः मनीषादित्वात् गवियुधिभ्यांस्थिरस्य षत्वं कुष्ठले भूस्थले शयानां मनीषादित्वात् शमिपरिविकुभ्यः स्थलस्य षत्वं दिविष्ठां तारामिव निर्म्मलां दिवि तिष्ठतीति सुनजनादिति डः अभिधानात् सप्तम्या अलुक् स्त्रियामाप् मनीषादित्वात् षत्वं ॥ ८४ ॥

सुषाम्नीं सर्व्वतेजःसु तन्वीं ज्योतिष्टमां शुभां। निष्टपन्तीमिवात्मानं ज्योतिःसात्कुर्व्वतीं वनं ॥ ८५ ॥

सुषेत्यादि। शोभनं साम यस्या इति विगृह्य अनउपधालोपिनोऽन्यतरस्यामिति ङीप् सुषामादिषुचेति षत्वं सुष्ठु प्रियम्वदामित्यर्थः तन्वीं कृशां शुभां कल्याणीं सर्व्वतेजस्सु ज्योतिष्टमां अतिशयेन ज्योतिष्मतीं ह्रस्वात्तादौ तद्धितइति षत्वं एवञ्च कृत्वा निष्टपन्तीमिवात्मानं सकृज्ज्वलयन्तीमिवात्मानं निसस्तपतावनासेवनइति षत्वं वनं ज्योतिःसात्कुर्व्वन्तीं अज्योतिर्ज्योतिः कुर्व्वाणां कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्ये सातिप्रत्ययः तत्र नुमि

विसर्जनीयस्येत्यादिना प्राप्तस्य षत्वस्य सात्पदाद्योरिति प्रतिषेधः युष्मदित्यादिनोदाहृतं छान्दसत्वात्॥ ८५॥

सुषाम्नीमित्यादि। पुनः कीदृशीं मैथिलीं सुषाम्नीं प्रियम्वदां शोभनं साम यस्याइति नान्तत्वात् स्त्रियामीप् निःसुदुर्भ्यःसामसेधसन्धीनामिति षत्वमिति परः स्वमते मनीषादित्वात् तन्वीं कृशां गुणादोतइति पक्षे ईप् सर्व्वज्योतिःसु मध्ये ज्योतिष्टमां प्रकृष्टप्रकाशरूपां लोकोर्धादिति षत्वं शुभां कल्याणयुक्तां आत्मानं निष्टपन्तीमिव सन्तापयन्तीमिव हनूमद्दर्शनात् तापस्य नैरन्तर्य्याभावात् निरस्पोसकृत्सेवनेइति षत्वमिति परः स्वमते मनीषादित्वात् तापस्य सकृत्सेवनमच विवक्षितं वनं ज्योतिःसात्कुर्व्वतीं कार्त्स्न्येन दीपयन्तीमित्यर्थः कार्त्स्न्यायत्योःसम्पद्यकादाविति चषात् किलादित्यादौ साद्वर्ज्जनात् न षत्वं॥ ८५॥

मधुसाद्भूतकिञ्जल्कपिञ्जरभ्रमराकुलां। उच्चसत्कुसुमां पुण्यां हेमरत्नलतामिव॥ ८६॥

मध्वित्यादि। मधुसाद्भूतकिञ्जल्कं कार्त्स्न्येन मधुतामापन्नं यत्किञ्जल्कं पुष्पकेसरं तन्मधुसाद्भूतकिञ्जल्कं आदेशप्रत्यययोरिति प्राप्तस्य पूर्व्ववत्प्रतिषेधः तेन पिञ्जराः पिङ्गलाः ये भ्रमराः तैराकुलां उच्चसत्कुसुमां चलत्पुष्पां हेमरत्नलतामिव यथा हेमरत्नमयीं कल्पतरुलतां पुण्यां पवित्रात्मदत्तामपीत्यर्थः॥८६॥

मधुसादित्यादि। पुनः कीदृशीं हेमरत्नलतामिव कल्पतरु लतामिव पुण्यां पवित्रां उत्तमामित्यर्थः हेमरत्नलतां कीदृशीं कार्त्स्न्येन मधुतामापन्नेन किञ्जल्केन पुष्पकेसरेण पिङ्गला ये भ्रमरास्तैराकुलां व्याप्तां अत्रापि शादर्श्नात् षत्वं उल्लसत्कुसुमां राजत्पुष्पां॥ ८६॥

विलोचनाम्बु मुञ्चन्तीं कुर्व्वाणां परिषेसिचां। हृदयस्येव शोकाग्निसन्तप्तस्योत्तमव्रतां॥ ८७॥

विलोचेत्यादि। विलोचनाम्बु अस्रु मुञ्चन्तीं विक्षिपन्तीं हृदयस्य शोकाग्निसन्तप्तस्य परिषेसिचां भृशं निर्व्वाणमिव कुर्व्वाणामेव तेति पूर्व्वेण सम्बन्धः सिचेर्यङन्तात् स्त्रीलिङ्गे भावे अकारप्रत्ययः उपसर्गादित्यादिना अभ्यासव्यवायेऽपि प्राप्तस्य षत्वस्य सिचोय ङीति प्रतिषेधः उत्तमव्रतां पतिव्रतात्वात्॥ ८७॥

विलोचनेत्यादि। विलोचनाम्बु मुञ्चन्तीं अस्रु क्षिपन्तीं शोकरूपाग्निसन्तप्तस्य हृदयस्य परिषेसिचां पुनःपुनरतिशयेन वा सेचनं कुर्व्वाणामिव अग्निनिर्व्वाणाय जलसेकः क्रियतइत्युत्प्रेक्षा सिचोयङ्लुकि संज्ञादइति अः स्त्रियामाप् शोकइत्यादौ अयङ् सिचेति यङ्वर्ज्जनात् षत्वं उत्तमव्रतां पतिव्रतात्वात् ईदृशीं मैथिलीमैक्षतेति सम्बन्धः॥ ८७॥

दृष्ट्वा तामभनग्वृक्षान् द्विषोघ्नन् परिषेधतः। परितस्तान् विचिक्षेप क्रुद्धः स्वयमिवानिलः॥ ८८॥

द्दष्ट्वेत्यादि। तां दृष्ट्वा वृक्षानभनक् चूर्णितवान् द्विषः शत्रून् परिसेधतः आगच्छतः घ्नन् हिंसन् पूर्व्ववत्प्राप्तस्य सेधतेर्गताविति प्रतिषेधः परितस्य समन्तादुद्दिचिक्षेप उन्मूलितवान् लिटः संयोगादित्वादकित्त्वे गुणः क्रुद्धः स्वयमिव साक्षादिवानिलः॥ ८८॥

द्दष्ट्वेत्यादि। अयं तां सीतां दृष्ट्वा वृक्षान् अभनक् भग्नवान् किङ्कुर्व्वन् द्विषः शत्रून् घ्नन् हिंसन् कीदृशान् परिसेधतः सर्व्वतोगच्छतः गीकइत्यादौ अगतिषेधेति गत्यर्थवर्ज्जनात् न षत्वं अयं तान् वृक्षान् परितः समन्तात् प्रचिक्षेप क्षिप्तवान् क्रुद्धः सन् स्वयं साक्षात् अनिल इव॥ ८८॥

अप्रतिस्तब्धविक्रान्तमनिस्तब्धोमहाहवे। विसोढवन्तमस्त्राणि व्यतस्तम्भद्घनध्वनिः॥ ८९॥

अप्रेत्यादि। घनध्वनिर्मेघनादः अनिस्तब्धोऽनभिभूतः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं कपि स्तम्भेरिति प्राप्तस्य षत्वस्य प्रतिस्तब्धनिस्तब्धौ चेति प्रतिषेधनिपातनं अस्त्राणि महाहवे विसोढवन्तं सोढइति प्रतिषेधः व्यतस्तम्भत् निष्पादितवान् एवं नयन्तोऽवदन्निति योज्यं स्तम्भेर्ण्यन्तस्य स्तम्भसिवुसहाञ्चङीति षत्वप्रतिषेधः॥ ८९॥

अप्रेत्यादि। घनध्वनिर्मेघनादः अप्रतिस्तब्धविक्रान्तं अनभिभूतविक्रमं हनूमन्तं व्यतस्तम्भत् निश्चलं कृतवान् कीदृशः अनिस्तब्धः अनभिभूतः कीदृशं महायुद्धे शस्त्राणि विसोढवन्तं सहे:

ऋवतुः वेमसहेति वेमत्वात् नेम्ङीश्रीदिति नेम् होढः सहवहोऽ
होढीति श्रोत्वं गोकइत्यादौ श्रनोङ्सहेति श्रोङ्वर्ज्जनात्र षत्वं
स्तम्भेः प्रेरणे ञिः ञिश्रीत्यङ् गोकइत्यादौ श्रनङ्स्तम्भेति श्रङ्व
र्ज्जनान्न षत्वं प्रतिस्तब्धनिस्तब्धयोः प्रतिनिशब्दौ उपसर्गप्रतिरू
पकौ तेन गोकइत्यादिना न षत्वं प्रतिनिभ्यां स्तम्भस्येति षत्वनि
षेधार्थपरसूत्रं ॥ ८६ ॥

ते विज्ञायाभिसोष्यन्तं रक्षैरक्षांसि सव्यथाः। अन्यै
रप्यायतं सेवुर्व्वरत्राशृङ्खलादिभिः ॥ ६० ॥

ते इत्यादि। राक्षसाः ये मारुतिं नेष्यन्तः रक्षैः रक्षांसि
विसोष्यन्तं अभिषेक्ष्यन्तं कपिं सुनोतेः स्यसनोरिति षत्वं यद्याक्र
म्यमाणेन नीयेत अवश्यं राक्षसान् रक्षैः सोष्यतीति विज्ञाय
सव्यथाः सभयाः सन्तः अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं
सेवुः बध्नन्ति स्म एहवन्धनइत्यस्य लिटि रूपं ॥ ६० ॥

ते इत्यादि। ते मारुतिं नयन्तो राक्षसाविज्ञाय हनूमत्प
राक्रममित्यर्थात् सव्यथाः सभयाः सन्तः ब्रह्मास्त्रबन्धे सत्यपि
अन्यैरपि वरत्राशृङ्खलादिभिरायतं दीर्घं कपिं सेवुः बध्नन्ति स्म
सवनहे नहोबन्धनं यां रूपं कीदृशं रक्षैः खगात्रसम्भवैरक्षांसि
अभिसोष्यन्तं अभिषेक्ष्यन्तं गोकइत्यादौ अस्यानासुञेति स्यान्त
वर्ज्जनान्न षत्वं वरत्रा चर्मरज्जुः ॥ ६० ॥

विषसादेन्द्रजिद्बुद्ध्वा बन्धे बन्धान्तरक्रियां। दिव्य बन्धोविषहते नापरं बन्धनं यतः॥ ९१॥

इति षत्वाधिकारः।

विषेत्यादि। बन्धे दिव्ये बन्धान्तरक्रियां बन्धनविशेषकरणं बुद्ध्वा इन्द्रजित् विषसाद विषादमुपगतः नियतं दिव्यबन्धं मुक्तवानिति यतोदिव्यबन्धोनापरं स्वयं बन्धनं विषहते अतोविषसादेति योज्यं सदिस्वंज्योःपरस्य लिटि षत्वप्रतिषेधः पूर्व्वस्य तु सदिरप्रतेरिति भवत्येव विषहतइति न प्रतिषेधः तत्र सोढरूपस्य ग्रहणात्। इति मूर्द्धन्याधिकारः॥ ६१॥

विषेत्यादि। इन्द्रजित् बन्धे बन्धान्तरकरणं बुद्ध्वा ज्ञात्वा विषसाद विषादं गतवान् गीकइत्यादिना षत्वे प्राप्ते सत्स्वञ्जोश्च्यांनाखेरिति प्रकृतेः षत्वनिषेधः खेस्तु षत्वमेव यतोयस्मात् दिव्यबन्धोऽपरं बन्धनं न विषहते गीकइत्यादिना षत्वं। इति षत्वाधिकारः॥ ९१॥

मुष्णन्तमिव तेजांसि विस्तीर्णोरस्थलं पुरः। उपसेदुर्दशग्रीवं गृहीत्वा राक्षसाः कपिं॥ ९२॥

इतःप्रभृति णत्वमधिकृत्याह। मुष्णेत्यादि। राक्षसाः पुरः कपिमादाय दशग्रीवमासेदुः ढौकितवन्तः ननु दर्शनगोचरं गताः अप्रभातत्वात् कीदृशं तेजांसि मुष्णन्तं खण्डयन्तमिव विस्तीर्णोरस्थलं विस्तृतवक्षसं तत्र रषाभ्यां नोणइति णत्वं॥ ६२॥

अथ णत्वाधिकारः। मुष्णन्तमित्यादि। राक्षसाः कपिं गृहीत्वा पुरोऽग्रतोदशग्रीवमुपसेदुः कीदृशं तेजांसि मुष्णन्तमिव खण्डयन्तमिव स्वतेजसाऽभिभवात् विस्तीर्णवक्षसं उभयत्र क्षुभ्नादिष्वन्तेन इति णत्वं॥ ६२॥

वज्रधाभिन्नमर्म्माणोभीमाः खरणसादयः। अग्रे वणं वर्त्तमाने प्रतीच्यां चन्द्रमण्डले॥ ६३॥

वज्रित्यादि। वानरद्विषाराक्षसाऊचुरिति वक्ष्यमाणेन सम्बन्धः कीदृशाः किमूचुरित्याह वज्रधा भिन्नमर्माणइति यानि कालान्तरे प्राणहराणि मर्म्माणि तानि वज्रधा भिन्नानि येषामिति वज्रीहिः अट्‌पवर्गसमुदायस्य व्यवधानादट्‌कुप्वाङित्यादिना णत्वं खरणसादयः खरस्येव नासिकायस्येति अज्नासिकायाइत्यच् नसादेशस्य पूर्व्वपदात्संज्ञायामिति णत्वं खरणसादयोराक्षसाः वनस्याग्रे अग्रेवणं राजदन्तादित्वात्परनिपातः वनं परगेति णत्वं प्रतीच्यान्दिशि यद्वनन्तस्य वनस्याग्रे उपरि वर्त्तमाने चन्द्रमण्डले प्रभातसन्ध्यायामित्यर्थः॥ ६३॥

वज्रधेत्यादि। वानरद्विषोराक्षसाइत्यूचुरित्यग्रिमश्लोकेनान्वयः कीदृशाः वज्रधा भिन्नानि मर्म्माणि जीवितस्थानानि येषां तादृशाः क्षुभ्नाऽदान्तेइत्यादिना अवकुप्वन्तरेपीति णत्वं भीमा भयानकाः खरस्येव नसा नासिका येषां ते आदयोयेषां ते तथा क्षुभ्नादित्यादावतद्धितइत्यस्य योगविभागात् णत्वं नसाशब्दस्य

रूपमिदं लपनं वदनं तुण्डमाननं नासिका नसेति रभसः नसा नासा च नासिकेति कोषान्तरं खरखुराभ्यां नासिकायानस्नसाविति परः किमूचुरित्याह चन्द्रमण्डले प्रतीच्यां पश्चिमायां दिशि वनस्याग्रे वर्त्तमाने सति अनेनोद्यानं निर्वणं वनशून्यं कृतमिति परश्लोकेनान्वयः वनस्याग्रे अग्रेवणं तस्मिन् व्यंपूर्व्वमिति अग्रे शब्दस्य पूर्व्वनिपातः अग्रेवणमिति पाठे देशाध्वकालेति ढसंज्ञा अग्रेवणमित्यनुस्वारवत् पाठोऽत्र प्रमादकृतः सप्तम्यन्तत्वादिति विद्याविनोदः अग्रेवणइति खरणसवत्वं.अग्रे मिश्रकासारिका सिध्रकापुरगाकोटराभ्योवनस्य संज्ञायामिति परसूत्रे संज्ञाया मिति सम्भवपरमुक्तं तेनासंज्ञायामपि णत्वं स्यादिति बोध्यं अग्रेवणेवर्त्तमाने प्रतीच्यां चन्द्रमण्डलइत्यनेन प्रातःसन्ध्या सूचिता ॥ ६३ ॥

निर्व्वणं कृतमुद्यानमनेनाम्रवणादिभिः। देववारु वनामिश्रैरित्यूचुर्व्वानरद्विषः ॥ ९४ ॥

निर्व्वेत्यादि। उद्यानं संनिवेशविशेषः निर्व्वणं वृक्षरहितं अनेन कपिना कृतं आम्रवणादिभिरुपलक्षितं उभयत्रापि प्रनिरन्तेति णत्वं देवदारुवनामिश्रैरिति विभाषौषधीत्यादिना णत्वं न भवति द्व्यक्षरत्र्यक्षरेभ्यइति वक्तव्यमिति वचनात् इत्येवमूचुः ॥ ९४ ॥

निर्व्वणमित्यादि। कीदृशमुद्यानं आम्रवणादिभिरुपलक्षितं कीदृशैः देववारुवनामिश्रैः देववारुवनयुक्तैः निर्व्वणाम्रवणयोः

खरणसवणत्वं देवदारुवनेत्यच योगविभागस्य क्वचिद्विषयात्व णत्वं परमते आम्रशरपीयूक्षशरखदिरनिःप्रकार्य्यान्तरिक्षुभ्योव नस्य णत्वं तथा ईरिकाभद्रिकातिमिरवर्ज्जं द्विव्यच्त्रचौषधिस्य पुर्व्वावनस्य णत्वं देवदारुशब्दस्य चतुरचत्वाद्देवदारुवनामिश्रै रित्यच न णत्वं॥ ६४॥

उपास्थिषत संप्रीताः पूर्व्वाह्णे रोषवाहणं। राक्षसाः कपिमादाय पतिं रुधिरपायिणां॥ ६५॥

उपेत्यादि। ते राक्षसाः पतिमुपास्थिषत उपागताः दृष्टिपथं गतादृत्यर्थः उपाद्देवपूजेत्यादिना सङ्गतिकरणे तङ् स्याब्धो रिच सम्प्रीताः हृष्टाः तेषामनुज्ञातप्रवेशत्वात् पूर्व्वाह्णे प्रत्यूषसि अह्नोदन्तादिति णत्वं रोषवाहणं कपिमादाय रोषस्यासनीकृतं वाहनमाहितादिति णत्वं रोषस्य तत्राधीयमानत्वात् पतिं रुधि रपायिणां राक्षसानां पानं देशइति णत्वं॥ ६५॥

उपेत्यादि। राक्षसाः कपिमादाय संप्रीताः सन्तः पूर्व्वाह्णे प्रत्यूषसि रुधिरपायिनां राक्षसानां पतिं रावणं उपास्थिषत उपगताः मैत्राध्वसङ्गाराधइति सङ्गे मं स्यादोर्ङिष्टीमे इति ङिः गुणाभावश्च मान्तोऽदनतइत्यत् कपिं कीदृशं रोषवाहणं आरूढ क्रोधं पूर्व्वाह्णइति प्राग्वन्नोणोऽतोऽह्नस्येति णत्वं रोषवाहणमिति खरणसवणत्वं परमते वाह्यपुर्व्वाहनस्य णत्वं रोषस्य वाह्यत्वात्

रुधिरपायिणामिति रुधिरं रक्तं पिबन्तीति यद्वादित्वात् णिन् सुर्णोऽदान्तइत्यादौ नैकाचकोस्त्वेति पाक्षिकं णत्वं अस्सृक्पाणा धिपं द्रष्टुं कपिमादाय राक्षसाइति क्वचित्पाठः तदा असृक् प्रधानं पानं येषां तेषामधिपं असृजां पानं यत्र सोऽसृक्पाणो देशः तस्याधिपमिति वा असृगेव पानं पेयं येषामिति वा खरणस वत्त्वं देशे पानस्य णत्वं नित्यं भावकरणयोः पानस्य वा णत्व मिति परः॥ ९५॥

सुरापाणपरिक्षीवं रिपुदर्पहरोदयं। परस्त्रीवा हिणं प्रापुः साविष्काराः सुरापिणः॥ ९६॥

सुरेत्यादि। सुरापाणात्परिक्षीवं मत्तं रावणं वा भावकरण योरिति णत्वं रिपुदर्पहरउदयोवृद्धिर्यस्य तं परस्त्रियं वाह यितुमुपभोक्तुं शीलं यस्य तं परस्त्रीवाहिणं प्रातिपदिकान्तइति णत्वाभावः पाक्षिकः प्रापुः सुष्ठु निकटीकृताः साविष्काराः साह ङ्काराः सुरापिणः सुरापैर्युक्ताः सुरां पिबन्तीति गापोष्टक् ते येषां सन्तीति मत्वर्थीयः एकाजुत्तरपदेणइति णत्वं उत्तरस्य प्राति पदिकान्तस्यैकाचृत्वात्॥ ९६॥

सुरेत्यादि। राक्षसारावणं प्रापुः कीदृशं सुरापाणेन परि क्षीवं मत्तं खरणसवणत्वं भावकरणयोः पानस्य वा णत्वमिति परः रिपूणां दर्पहारकउदयोयस्य तं परस्त्रियं वोढुं उपभोक्तुं शीलं यस्य तं सुर्णोदान्तेइत्यादिना नैकाचकोस्त्वेति पक्षे णत्वं परस्त्री

कामिणमिति पाठे तेनैव कवर्गवत्त्वात् नित्यं णत्वं कीदृशाः षावि ष्कारा: षाहङ्कारा: सुरापिण: सुरापैर्युक्ता: सुरां पिबन्तीति सुरापा: हनजनादिति ड: ततोऽस्त्यर्थे इन् पूर्व्ववदेकाचत्वात् नित्यं णत्वं ॥ ६६ ॥

संहर्षयोगिणः पादौ प्रणेमुस्त्रिदशद्विषः। प्रहिण्व न्तोहनूमन्तं प्रमीणन्तं द्विषन्मतीः ॥ ९७ ॥

संहेत्यादि। संहर्षयोगिणः स्वर्द्धायोगिनः कुमतिचेति णत्वं ते अन्योन्याभिभवेच्छया त्रिदशद्विषोरावणस्य पादौ प्रणेमुः उप सर्गादसमासेऽपीति णत्वं हनूमन्तं प्रहिण्वन्तः ढौकयन्तः द्विष न्मतीः शत्रुबुद्धीः प्रमीणन्तं अभिभवन्तं मीञहिंसायां क्र्यादिकः हिनुमिनाइति णत्वं ॥ ६७ ॥

समित्यादि। राक्षसास्त्रिदशद्विषोरावणस्य पादौ प्रणेमुः प्रणतवन्तः प्राम्नोणइत्यादिना नादिधातुत्वाणत्वं संहर्षयो गिणः महाहर्षयुक्ताः कुर्णइत्यादिना कवर्गवत्त्वात् नित्यं णत्वं हनूमन्तं प्रहिण्वन्तः प्रापयन्तः कीदृशं द्विषन्मतीः शत्रुबुद्धीः प्रमी णन्तं अभिभवन्तं प्राम्नोणइति मीनाहिम्योर्णत्वं ॥ ६७ ॥

प्रवपाणि शरीरे भूमौ वानरस्य वनच्छिदः। क्षाम न्त्रयत संक्रुद्धः सम्मितिं रक्षसां पतिः ॥ ९८ ॥

प्रवेत्यादि। अस्य वानरस्य वनछिदः शिरोभूमौ प्रवपाणि छित्वा पातयामि आनिशोऽडिति णत्वं वपिरच पातने वर्त्तते संक्रुद्धः रक्षसां पतिः स्वामी समितिं समूहं आमन्त्रयत भाषितवान्॥ ९८॥

प्रवेत्यादि। रक्षसां पतीरावणः संक्रुद्धः सन् समितिं सभां आमन्त्रयत उक्तवान् किमित्याह अहं वनछिदो वानरस्य शिरो भूमौ प्रवपाणि छित्वा पातयामीत्यर्थः वपिरच प्रहरणे प्राम्वणोदिति आनिपोणत्वं॥ ९८॥

प्रण्यगादीत् प्रणिघ्नन्तं घनः प्रणिनदन्निव। ततः प्रणिहितः स्वार्थे राक्षसेन्द्रं विभीषणः॥ ९९॥

प्रण्येत्यादि। ततउत्तरकालं विभीषणोराक्षसेन्द्रं प्रणिघ्नन्तं हन्तुमारभमाणं प्रण्यगादीत् वक्तं प्रवृत्तः घनइव प्रणिनदन् गर्जन् स्वार्थे राक्षसेन्द्रस्य प्रणिहितोऽवहितमनाः सर्व्वत्र नेर्गदेति णत्वं॥ ९९॥

प्रण्येत्यादि। ततोऽनन्तरं हनूमन्तं प्रणिघ्नन्तं हन्तुमारभमाणं राक्षसेन्द्रं विभीषणोघनइव प्रणिनदन् गर्ज्जन् प्रण्यगादीत् वक्तुं प्रवृत्तः स्वार्थे रावणप्रयोजने प्रणिहितः सावधानः सर्व्वत्र प्राम्वणोणइति णत्वं॥ ९९॥

प्रणिशाम्य दशग्रीव प्रणियातुमलं रुषं। प्रणिजानीहि हन्यन्ते दूतादोषे न सत्यपि॥ १००॥

प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य रोषं त्यज लोटि शमि रूपं शमामष्टानामिति दीर्घः रुषं प्रणियातुमर्लं न किञ्चित् पूर्व्व वत्णत्वं प्रणिजानीहि अवगच्छ सत्यपि दोषे न हन्यन्ते दूता इति जानातेः शेषधातोरुपदेशावस्थायां अककाद्यषान्तत्वात् शेषे विभाषेत्यादिना णत्वं॥ १००॥

प्रणीत्यादि। हे दशग्रीव प्रणिशाम्य शान्तोभव शमेर्ण्यन्तात् रूपं यन्तोशमादिभिदइति दीर्घः ह्रेर्लोपः रुषं क्रोधं प्रणियातुं आश्रयितुं अलं नार्हसि निषेधार्थोऽलं शब्दः उभयत्र प्रात्वन्नोण इति णत्वं त्वं प्रणिजानीहि अवगच्छ पूर्व्ववदकखाद्यषान्तान्नने रिति पक्षे णत्वं दोषे सत्यपि दूता न हन्यन्ते नीतिज्ञैरित्यर्थात् ॥ १००॥

प्राणयन्तमरिं प्रोचे राक्षसेन्द्रोविभीषणं। प्राणिणि षुर्न पापोऽयं योऽभाङ्क्षीत्प्रमदावनं॥ १०१॥

प्राणेत्यादि। अरिं कपिं यः प्राणयति जीवयति तं प्राणयन्तं विभीषणं व्यक्षप्राणने अनधेत्यस्य रूपं अनितेरिति णत्वं प्रोचे राक्ष सेन्द्रः न प्राणिणिषुः न जीवितुमिच्छुरयं पापः उभौ साभ्यासस्येति णत्वं द्वयोरपि योऽभाङ्क्षीत् भग्नवान् प्रमदावनं हलन्तलक्षणा वृद्धिः॥ १०१॥

प्राणेत्यादि। अरिं हनूमन्तं प्राणयन्तं जीवयन्तं विभीषणं राक्षसेन्द्रः प्रोचे उक्तवान् अनितेर्ण्यन्तस्य रूपं किमुक्तवानित्याह

अथं पापोदुराचारेण प्राणिणिषुर्न जीवितुमिच्छुः अनितेः अनि रूपं प्राग्वन्तोश इत्यादिना वाननेति विभाषया णत्वं योऽयं मम रावणं अभाङ्क्षीत् भग्नवान् त्वां रूपं ॥ १०१ ॥

आघानिषत रक्षांसि येनाप्तानि वने मम । न प्रहण्मः कथं पापं वद पूर्व्वापकारिणं ॥ १०२ ॥

आघेत्यादि । मम आप्तानि अक्षप्रभृतीनि येन वने आघानिषत मारितानि कर्म्मणि लुङ् चिण्वदिट् हो हन्तेरिति घत्वं तपर परिच्छिन्नाकारपूर्व्वस्य नकारस्य हन्तेरत्पूर्व्वस्येति णत्वं न भवति तं पूर्व्वापकारिणं पापं कथं न प्रहण्मः न मारयाम इति वद कथय ब्वोर्व्वेति णत्वं ॥ १०२ ॥

आघेत्यादि । येन ममाप्तानि रक्षांसि अक्षप्रभृतीनि रणे आघानिषत मारितानि कर्म्मणि टी हनग्रहदृशश्च इति स्मिण् खेर्हौघो ञ्णितिश्चेति घः हनोक्तोऽप्तोणन इत्यत्र अ इत्युपलक्षणं हस्यान्यथा त्वे णत्वाभाव इति बोध्यं तेन घत्वेऽपि णत्वनिषेधः हो घत्वे इति णत्व निषेधार्थं परसूत्रं तं पूर्व्वापकारिणं पापं कपिं कथं वयं न प्रहण्मः इति त्वं वद आम्वन्तोण इत्यादौ मवान्तहन इति पक्षे णत्वं पूर्व्वा पकारिणमिति अपुर्ण इत्यादिना कवर्गवत्त्वात् नित्यं णत्वं ॥ १०२ ॥

वेश्मान्तर्हणनं कोपान्मम भ्रातुः करिष्यतः । मा कार्षीरन्तरयणं प्रयाणार्हमवेह्यमुं ॥ १०३ ॥

वनान्तेत्यादि। अयं पापोऽस्मान् मधिन्या तिरस्कृत्य भूयः पुनरपि मधूनि नः प्रणिचिष्यति न चुम्बिष्यति न भक्षयिष्यतीत्यर्थः कीदृशः वनान्तप्रेङ्खणः वनमध्यगः इखिगतौ नन्द्यादित्वाद्‌नः नेर्गदोऽन्तरदुर्गैरित्यादिना इजादीदित्वात् णत्वं फलानां परिणिंसकः चुम्बकः भक्षकइत्यर्थः प्राम्यन्तोणोऽन्तरदुर्गैरित्यादिना निंसनिचनिन्दां विभाषया णत्वं ॥ १०६ ॥

हरेः प्रगमनं नास्ति न प्रभानं हिमद्रुहः। नातिप्रवेपनं वायोर्म्मया गोपायिते वने ॥ १०७ ॥

हरेरित्यादि। मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि प्रगमनं सञ्चारोनास्ति हिमद्रुहः आदित्यस्य न प्रभानं न प्रकर्षेण दीप्तिः वायोर्नातिप्रवेपनं मन्दगमनं तदनेन भग्नमित्यर्थात् कृत्यचइतिप्राप्तस्य णत्वस्य नभाभूपूकमिगमीत्यादिना प्रतिषेधः ॥ १०७ ॥

हरेरित्यादि। मया गोपायिते रक्षिते वने हरेरिन्द्रस्यापि चन्द्रस्य वा प्रगमनं सञ्चारोनास्ति हिमद्रुहः सूर्य्यस्य प्रभानं प्रकृष्टा दीप्तिर्नास्ति वायोरतिप्रवेपनं प्रचण्डगमनं नास्ति सर्व्वत्र नेर्गदोऽन्तरदुर्गैरित्यादौ ख्याभादिवर्ज्जनान्न णत्वं ॥ १०७ ॥

दुष्पानः पुनरेतेन कपिना भृङ्गसम्भृतः। प्रनष्टविनयेनाग्र्यः स्वादुः पुष्पासवोवने ॥ १०८ ॥

दुष्पेत्यादि। पुनरेतेन प्रनष्टविनयेन कपिना पुष्पासवो दुष्पानः दुःखेन पास्यत इति आतोयुच् पात्यदान्तादिति णत्वस्य प्रतिषेधः भृङ्गसम्भृतो भ्रमरसंश्रितः प्रनष्ट इति नशेःषान्तस्येति प्रतिषेधः अग्र्यः श्रेष्ठः ॥ १०८ ॥

दुष्पानेत्यादि। प्रनष्टविनयेन एतेन कपिना वने भृङ्गेण भ्रमरेण सम्भृतः संश्रितः श्रेष्ठः अग्र्यः स्वादुर्मिष्टः पुष्पासवः पुनर्दुष्पानः दुःखेन पास्यते मयाद्य ताडनात् नोचेऽन्तरदुर्गेरित्यादौ दुर्श्वर्ण्णनाम णत्वं नशः षो प्रक्षाजिति षङ् प्रास्वन्तोण इत्यादिना नशेः शान्तत्वाभावात् न णत्वं ॥ १०८ ॥

रोषभीममुखेनैवं चुक्षतोक्तो प्लवङ्गमः। प्रोचे सानुनयं वाक्यं रावणं स्वार्थसिद्धये ॥ १०९ ॥

इति णत्वाधिकारः।

रोषेत्यादि। रोषभीममुखेन इति पदव्यवायेऽपि णत्वप्रतिषेधः भीममुख इत्यनेन निमित्तनिमित्तिनोर्व्यवधानात् क्षुभादिषुचेति णत्वप्रतिषेधः एवमुक्ते सति प्लवङ्गमः रावणं प्रोचे वक्तुं प्रवृत्तः वाक्यं वक्ष्यमाणं सानुनयं अनुकूलं किमर्थं स्वार्थस्य सिद्धये स्वार्थस्य सीताप्रत्यर्प्पणं। इति णत्वाधिकारः॥ १०९ ॥

रोषेत्यादि। रोषेण भीमं दुष्प्रेक्ष्यं मुखं यस्य तेन क्षुभता कलुषीभवता रावणेन एवमुक्ते सति प्लवङ्गमो हनूमान् स्वार्थस्य सीता

प्रत्यर्पणरूपस्य सिद्धये सानुनयमनुकूलं वाक्यं रावणं प्रोचे रोष भीममुखेनेति पूर्णइत्यादौ अतद्वादिति अतद्वपदेन नकारवत् पूर्व्ववर्त्तिनिमित्तवदेकमाचपदं गृह्यते प्रथमदृष्टत्वात् न तु पूर्व्व पूर्व्ववर्त्ति यावत् पदं तेनाच कार्य्यकारणयोर्भीमपदव्यवधानात् न णत्वं अनाङ्पदव्यवायेऽपीति णत्वनिषेधार्थं परसूत्रं चुक्षतेति क्षुभ्नादित्वात् भयुक्तस्य नस्य णत्वनिषेधः। इति णत्वाधिकारः। ॥ १०८ ॥

दूतमेकं कपिं बद्धमानीतं वेश्म पश्यतः। लोकत्रय पतेः क्रोधः कथं तृणलघुस्तव ॥ ११० ॥

इतः प्रभृति प्रकीर्णकश्लोकानाह दूतमित्यादि। दूतं सन्दे शस्य हारकं एकमद्वितीयं बद्धं अस्मतत्लोकतं वेश्मानीतं पश्यत इति सर्व्वमेतन्न रोषकारणं अतोलोकत्रयपतेस्तवायं तृणवल्लघु रसारः कथं कोपः ॥ ११० ॥

अथ प्रकीर्णकाः। दूतमित्यादि। एकमद्वितीयं बद्धं वेश्म गृह मानीतं कपिं दूतं सन्देशहारकं मां पश्यतोलोकत्रयपतेस्तव कथं तृणवत् लघुरसारः क्रोधः ॥ ११० ॥

अभ्याहितजनप्रज्ञे विजिगीषापराङ्मुखे। कस्मादा नीतिनिष्णस्य संरम्भस्तव तापसे ॥ १११ ॥

अन्वेत्यादि। अग्न्याहितजनप्रह्वे आदिनाग्नौ जने प्रवणे वाहि ताग्न्यादिषु पूर्व्वनिपातः तस्मिन् विजिगीषापराङ्मुखे व्यक्तरा ज्यत्वात् तापसे रामे तपःसहस्राभ्यां विनिनी अण्वेत्यण् निष्णस्य तव नीतौ पटुप्रज्ञस्य कस्माद्धेतोः संरम्भः रोषः॥ १११॥

अन्वेत्यादि। कस्माद्वा तव तापसे रामे संरम्भः क्रोधः कीदृशे अग्न्याहितजनप्रह्वे याज्ञिकजनेषु नम्रे अग्निराहितोयेन सोऽ ग्न्याहितः क्तान्तस्य पूर्व्वनिपातश्चौत्सर्गिकः अत्र तु आहितादि रग्न्यादेरिति सूत्रेण क्तान्तस्य विकल्पेन परनिपातइति परः स्वमते पूर्व्वनिपातपरनिपातयोरन्वयबोधेन कर्त्तव्यत्वं नियमा भावात् तथात्वे विवक्षाधीनत्वादुभयपदं सिद्धमेव विजिगीषा पराङ्मुखे विजेतुमिच्छा विजिगीषा तत्र पराङ्मुखे विगतस्पृहे कीदृशस्य नीतिनिष्णस्य नीतौ पण्डितस्य॥ १११ ॥

न सर्व्वरात्रकल्याण्यस्त्रियोवा रत्नभूमयः। यं विनि र्ज्जित्य लभ्यन्ते कः कुर्य्यात्तेन विग्रहं॥ ११२॥

नसेत्यादि। यं विनिर्जित्य सर्व्वरात्रं कल्याण्यः स्त्रियोन लभ्यन्ते सर्व्वास्र ताराचयश्चेति पूर्व्वकालेति सः अहःसर्व्वेत्यादिना अच् सर्व्वरात्रं कल्याण्यइति सः न रत्नभूमयः रत्नाकराः रत्नानि भूमयश्चेति सः कः तेन सह विग्रहं कुर्य्यात् सन्धिरेव युक्तः॥११२॥

यथेत्यादि। यं विनिर्जित्य सर्व्वरात्रान् व्याप्य कल्याण्यः सुखदाः स्त्रियोरत्नानि भूमयश्च न लभ्यन्ते तेन सह विग्रहं कः पुरुषः कुर्य्यात् सर्व्वाश्च ता रात्रयश्चेति सर्व्वरात्राः ततः सदाध्वादिव्याप्याविति द्वितीयाविधानात् द्वितीयातत्पुरुषः सर्व्वैकदेशसंख्यातेति षः तदन्तरात्रिशब्दस्य पुंलिङ्गत्वं पूर्व्वरात्रवदत्युदाहरणेन ज्ञापितं॥ ११२॥

सङ्गच्छ रामसुग्रीवौ भुवनस्य समृद्धये। रत्नपूर्णाविवाम्भोधी हिमवान् पूर्व्वपश्चिमौ॥ ११३॥

तदेव दर्शयन्नाह सङ्गेत्यादि। यथा रत्नपूर्णावम्भोनिधी पूर्व्वपश्चिमौ भुवनस्य समृद्धये हिमवान् सङ्गतवान् तथा त्वमपि रामसुग्रीवौ भुवनस्य समृद्धये सङ्गच्छ सङ्गतिं कुरु सकर्म्मकत्वात्समोगमिति तङ् न भवति॥ ११३॥

सङ्गेत्यादि। भुवनस्य वृद्धये त्वं रामसुग्रीवौ संगच्छ सकर्म्मकत्वात् समोगम्यृच्छेति न सं हिमवान् हिमालयः पर्व्वतः रत्नैः पूर्णौ पूर्व्वपश्चिमौ समुद्रौ यथा सङ्गतवान्॥ ११३॥

सुहृदौ रामसुग्रीवौ किङ्कराः कपियूथपाः। परदारार्पणेनैव लभ्यन्ते मुञ्च मैथिलीं॥ ११४॥

तच्च सङ्गतं परदारार्पणेनैवेति दर्शयन्नाह सुहृदित्यादि। रामसुग्रीवौ सुहृदौ लभ्येते सुहृद्दुर्हृदौमित्रामित्रयोरिति निपा

तनं तत्प्रतिक्षाभात् किङ्कराखभ्यन्ते किं कुर्व्वन्तीति दिवाविभेति
टः कपियूथपाः नीलप्रभृतयः तस्मान्मुञ्च मैथिलीमिति॥११४॥
सुहृदित्यादि। रामसुग्रीवौ सुहृदौ त्वया लभ्येते एवं सति
कपियूथपानीलादयः किङ्कराखभ्यन्ते परस्त्रीसमर्पणेनैव नतु
स्वकीयकिञ्चिद्द्रव्यप्रदानेन तस्मान्मैथिलीं मुञ्च त्यज॥११४॥

धर्म्मं प्रत्यर्पयन् सीतामर्थं रामेण मित्रतां। कामं
विश्वासवासेन सीतां दत्वाप्नुहि त्रयं॥११५॥

किञ्च सीताप्रत्यर्पणात्पुरुषार्थप्राप्तिरिति दर्शयन्नाह धर्म्म-
मित्यादि। सीतां प्रत्यर्पयन् धर्म्मं अधर्म्मविरतेः अर्थं रामेण
मित्रतां सर्व्वलाभानामर्थसम्पन्नमित्रलाभस्य महत्त्वात् विश्वास
वासेन रामविश्वासपूर्व्वकेणावस्थानेन कामं अतः सीतां दत्वा
आप्नुहि लभस्व त्रयं त्रिवर्गे त्रयोऽवयवा अस्येति द्विविभ्यां
तयस्यायज्वा॥११५॥
धर्म्ममित्यादि। सीतार्पणेन त्रिवर्गप्राप्तिं दर्शयति सीतां दत्वा
त्रयं त्रिवर्गं आप्नुहि लभस्व यथा सीतां प्रत्यर्पयन् धर्म्मं प्राप्स्यसि
परस्त्रीहरणाभावात् रामेण सह मित्रतामर्थं प्राप्स्यसि विश्वास
वासेन कामं प्राप्स्यसि त्रयोऽवयवा अस्येति द्वित्रिर्भ्यां यट्॥११५॥

विराधताडकावालिकबन्धखरदूषणैः। न च न
ज्ञापितोयादृङ्मारीचेनापि ते रिपुः॥११६॥

रिपुरेवास्तु किन्तेन मित्रीकृतेन नवासौ शक्तोऽपकर्त्तुमिति चेदाह विराधेत्यादि। यादृगसौ रिपुः तादृग्विराधादिभिः नच न ज्ञापितः तव अपि तु ज्ञापित एवेत्यर्थः तस्मात्तेन सह मैत्री युक्ता न विग्रह इति भावः यादृगिति त्यदादिषु दृश इति क्विन् आसर्व्वनाम्नः॥ ११६॥

विराधेत्यादि। शत्रुरपि रामः किं कर्त्तुं शक्नोतीत्यत आह तव रिपुर्यादृक् विराधाद्यैर्मारीचेन च न न ज्ञापितः अपितु ज्ञापित एव॥ ११६॥

खरादिनिधनञ्चैव मा मंस्था वैरकारणं। आत्मानं रक्षितुं यस्मात् कृतं तन्न जिगीषया॥ ११७॥

खरादीन् व्यापादयता तेनैव वैरकारणमाचरितं न मयेति चेदाह खरेत्यादि। खरादिनिधनञ्चापि वैरकारणं मा मंस्थाः मा ज्ञासीः लुङि रूपं यस्मादात्मानं संरक्षितुं तत् खरादिनिधनं कृतं न तु जिगीषया विजेतुमिच्छया॥ ११७॥

खरादीत्यादि। खरप्रभृतिविनाशमपि विरोधवीजं त्वं मा मंस्थाः मा ज्ञासीः ण्यां रूपं यस्मात् आत्मानं रक्षितुं तत् कृतं नतु जेतुमिच्छया॥ ११७॥

ततः क्रोधानिलापातकम्प्रास्याम्भोजसंहतिः। महा ह्रद इव क्षुभ्यन् कपिमाह स रावणः॥ ११८॥

ततइत्यादि। ततः कपिवाक्यानन्तरं क्रोधोऽनिलइव तस्या पातेन संश्लेषेण कम्पा कम्पनशीला आस्याम्भोजानां मुखपद्मानां संहतिर्य्यस्य सएवं महाह्रदइव क्षुभ्यन् चलन् दैवादिलाच्छ्यन् ॥११८॥

ततइत्यादि। कपिवचनानन्तरं रावणोमहाह्रदइव क्षुभ्यन् सञ्ज्वलन् कपिमाहस्म उक्तवान् कीञ्चेनातीतेइति की पश्यतिण्यन् एव्वाहश्चेति ब्रूञस्थिपो णप् आहादेशश्च कीदृशः क्रोधोऽनिल इव तस्यापातेनागमनेन संश्लेषेण कम्पा कम्पनशीला मुख पद्मानां संहतिर्य्यस्य स तथा अतएव ह्रदतुल्यता ॥११८॥

हतराक्षसयोधस्य विरुग्णोद्यानशाखिनः। दूतो ऽस्मीति ब्रुवाणस्य किं दूतसदृशं तव ॥११९॥

हतेत्यादि। हताः राक्षसयोधाः अक्षप्रभृतयोयेन विरुग्णाः भग्नाः ओदितश्चेति निष्ठानत्वं उद्यानशाखिनोयेन तस्यैवम्विधस्य तव दूतोऽस्मीति ब्रुवाणस्य किं दूतसदृशं सन्देशमात्रस्य प्राप काहि दूताइति भावः॥११६॥

हतेत्यादि। हे वानर अहं दूतोऽस्मीति ब्रुवाणस्य तव किं कर्म्म दूतसदृशं न किमपि दूताहि सन्देशप्रापकाभवन्ति तव कीदृशस्य हताराक्षसयोधायेन विरुग्णाउद्यानवृक्षायेन स तस्य ॥११६॥

पङ्गुवालस्त्रियोनिघ्नन् कबन्धखरताडकाः। तपस्वी यदि काकुत्स्थः कीदृक् कथय पातकी॥१२०॥

अभ्यर्हितजनप्रकृते तापसे कस्मात्संरम्भइत्याह पङ्गुवाले त्यादि। पङ्गुमङ्गविकलं कबन्धं वालं खरं स्त्रियं ताडकां निघ्नन् व्यापादयन् यदि तपस्वी काकुत्स्थः कीदृक् पातकीति कथय इदं किमीरीशकी॥१२०॥

पङ्गवालेत्यादि। कस्मात् संरम्भस्तव तापसे इत्यस्योत्तरमाह पङ्गु कबन्धं वालं खरं स्त्रियं ताडकाञ्च निघ्नन् रामोयदि तपस्वी तदा पातकी कीदृगिति त्वं कथय॥१२०॥

अभिमानफलं जानन्महत्त्वं कथमुक्तवान्। रत्ना दिलाभशून्यत्वान्निष्फलं रामविग्रहं॥१२१॥

यदुक्तं यं विनिर्जित्य स्त्रियोरत्नभूमयस्य न लभ्यन्तइत्याह अभीत्यादि। अभिमानः फलं यस्य महत्त्वस्य तज्जानन् रत्नादि लाभशून्यं रामविग्रहं कथं निष्फलमुक्तवानसि विग्रहे सति अभिमानफलं महत्त्वं स्यात्॥१२१॥

अभीत्यादि। न सर्व्वराचकस्याणइत्यादि यदुक्तं तदुत्तर मिदं अभिमानमेव फलं यस्य तन्महत्वं जानन् त्वं कथं रामवि ग्रहं रत्नादिलाभशून्यत्वात् निष्फलं उक्तवान् अभिमानस्य फल त्वात्॥१२१॥

परस्त्रीभोगहरणं धर्म्मएव नराशिनां। सुखमस्ती त्यभाषिष्ठाः का मे साशङ्कता त्वयि॥१२२॥

परेत्यादि। सीतां प्रत्यर्पयन् धर्म्ममाप्नुहीत्येतदप्ययुक्तमित्याह परस्त्रीणां हरणं परेषाम्भोगहरणञ्च इयमपि नराशिनां धर्म्म एव आचारएव अतोसुखमस्तीत्यभाषिष्ठाः अभिहितवानसीति सीतां प्रत्यर्पयन् धर्म्ममाप्नुहीति लुङि रूपं भयात्प्रत्यर्पयसि चेदाह का मे साशङ्कता त्वयीति त्रैलोक्यविजयित्वात् त्वयीति हनूमद्व्यपदेशेन रामं सूचयति॥१२२॥

परेत्यादि। धर्म्मं प्रत्यर्पयन् सीतामित्यादि यदुक्तं तदप्ययुक्तमित्याह परेषां स्त्रीणां भोगानाञ्च यद्धरणं तदेव नराशिनां राक्षसानां धर्म्म आचारः अतएव सुखमस्ति इति हेतोः सीतां प्रत्यर्पयन् धर्म्ममित्यादि अभाषिष्ठाः उक्तवानसि त्वां रूपं भयात् सीतां प्रत्यर्पयिष्यति चेदाह का मे मम त्वयि साशङ्कता भयवत्ता त्रैलोक्यविजयित्वात् त्वयीति रामव्यपदेशेन हनूमतीति ॥१२२॥

ब्रूहि दूरविभिन्नानाम्टद्धिशीलक्रियान्वयैः। हनूमन् कीदृशं सख्यं नरवानररक्षसां॥१२३॥

सङ्गतं रामसुग्रीवावित्येतदपि न घटतइत्याह। ब्रूहीत्यादि ऋद्ध्या विभूत्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन दूरविभिन्नानां नरादीनां कीदृशं सख्यमिति हनूमन् त्वमेव ब्रूहि॥१२३॥

ब्रूहीत्यादि। संगच्छ रामसुग्रीवाविति यदुक्तं तदप्ययुक्त मित्याह हे हनूमन् त्वमेव ब्रूहि नरवानरराक्षसानां सख्यं कीदृशं कीदृशानां छायया सम्पत्या शीलेन स्वभावेन क्रियया अनुष्ठानेन अन्वयेन कुलेन षातिविभिन्नानां ॥ १२३ ॥

एकोद्वाभ्यां विरोधस्तु जिताभ्यामविवक्षितः। हत स्छलेन मूढोऽयं तेनापि तव कः स्मयः ॥ १२४ ॥

विराधादिभिर्ज्ञापितोऽसि याद्दगरिरित्यत्रोत्तरमाह एक इत्यादि। एकेनापि विराधेन प्रथमं द्वावपि जितौ ताभ्यां पश्चा द्धतः तत्रापि न प्रकाशं अपि तु छलेन यतोऽसौ मूढोऽल्पबुद्धिः तथाप्यविवक्षितः शौर्य्यान्न प्रतीतः तेनापि हतेन तव विस्मयोजातः ॥ १२४ ॥

एकइत्यादि। विराधादिभिर्नच न ज्ञापितोयाद्दगित्यस्यो त्तरमिदं एकेनापि विराधेन द्वावपि जिताविति जिताभ्यां द्वाभ्यां पश्चात् छलेन विराधोऽपि हतः यतोऽसौ मूढः अल्पबुद्धिः एको ऽद्वितीयः अविवक्षितः अप्रसिद्धः शौर्य्येणाप्रथितोवा तेनापि हतेन तव कोविस्मयोजातः ॥ १२४ ॥

मन्नियोगाच्च मारीचः पलायनपरायणः। युयु त्सारक्षितोरामं ममारापहरन् वने ॥ १२५ ॥

मन्त्रीत्यादि। मारीचस्तु यतोराममपहरन् ममार मन्त्रियोगाद्‌ादेशात् पलायनपरायणः अपसर्पणनिष्ठः सन् पलायनपरायणइति परस्य नामरूपत्वादनुपसर्गत्वान्न णत्वं युयुत्सारक्षितः योद्धुमिच्छारक्षितः मन्त्रियोगादिति प्रत्ययोत्तरपदयोश्चेति अस्मदोमदादेशः॥१२५॥

मदित्यादि। मारीचेन च ज्ञापितइत्यस्योत्तरमाह मारीचस्तु मन्निदेशतः पलायनतत्परः सन् वने रामं अपहरन् योद्धुमिच्छया रक्षितोममार तेन तव कोविस्मयइति भावः॥१२५॥

निजघानान्यसंसक्तं सत्यं रामोलतामृगं। त्वमेव ब्रूहि सञ्चिन्त्य युक्तं तन्महतां यदि॥१२६॥

निजघानेत्यादि। रामोलतामृगं वानरं वालिनं निजघानेति सत्यमेतत् किन्तु अन्यसंसक्तं सुग्रीवेण सह युध्यमानं हतवान् तच्च त्वमेव सञ्चिन्त्य निश्चित्य ब्रूहि युक्तं तन्महतां यदि॥१२६॥

निजेत्यादि। वालिवधोऽप्ययुक्तइत्याह लतामृगं वालिनं रामोनिजघान कीदृशं अन्यसंसक्तं सुग्रीवेण सह युध्यमानं सत्यं साधुं सत्यं तथ्यं वा निजघानेत्यनेन ब्रूहीत्यनेन वा सम्बन्धः हे हनूमन् त्वमेव सञ्चिन्त्य ब्रूहि तद्यदि महतां युक्तं॥२६॥

X पुंसा भक्ष्येण बन्धूनामात्मानं रक्षितुं बधः। क्षमिष्यते दशास्येन कथ्येयं तव दुर्मतिः॥१२७॥

पुंसेत्यादि। आत्मानं रक्षितुं पुंसा भक्ष्येण भक्षणार्हेण सतां बन्धूनां खरदूषणादीनां बधोदशास्येन क्षमिष्यते सहिष्यति कथेयं कभवेयं तव दुर्मतिर्दुष्टबुद्धिः कशब्दादव्ययात्यप् अमेहकत सिचिभ्यइति परिगणनात् ॥ १२७ ॥

पुंसेत्यादि। आत्मानं गोपितुं यस्मादिति यदुक्तं तस्योत्तरमिदं भक्ष्यार्हेण पुंसा रामेण आत्मानं रक्षितुं बन्धूनां खरदूषणादीनां बधोभारणं दशास्येन क्षमिष्यते सहिष्यते इयं तव दुर्मतिः दुर्बुद्धिः कत्या कभवा कुच जातेत्यर्थः त्य चाद्यचिरेत्यादिना त्यः ॥ १२७ ॥

कपिर्जगाद दूतोऽहमुपायं तव दर्शने। द्रुमराक्षसविध्वंसमकार्षं बुद्धिपूर्ब्बकं ॥ १२८ ॥

इदानीं कपिर्दशाननोक्तं दूषयन्नाह कपिरित्यादि। तव दर्शने अन्यउपायोनास्तीति बुद्धिपूर्ब्बकं बुद्ध्वा निरूप्य द्रुमभङ्गं राक्षसविनाशञ्च उपायमकार्षं कृतवानस्मीति कपिर्जगाद अन्यथा दूतोऽहमागतइति मदावलिप्तः कोमां गणयेत् अतः सहशमेव मया कृतमिति ॥ १२८ ॥

कपिरित्यादि। इदानीं रावणोक्तं क्रमेण दूषयन् कपिराह तत्र प्रथमं किं दूतसहशं तवेत्यस्योत्तरमाह कपिर्जगाद किन्तदित्याह दूतोऽहं तव दर्शने द्रुमाणां राक्षसानाञ्च विनाशरूप

मुपायं अकार्षं कृतवानस्मि बुद्धिपूर्व्वकं बुद्ध्या निरूप्य अन्यथा दूतो ऽयमागतइति कोमां गणयेत् अतः सद्द्यमेव कृतमिति ॥ १२८ ॥

आत्रिकूटमकार्षुर्ये त्वत्कानिर्ज्जङ्गमं जगत्। दश ग्रीव कथं ब्रूषे तानवध्यान्महीपतेः ॥ १२९ ॥

आत्रीत्यादि। हे दशमूर्द्धन् ये त्वत्काः त्वद्ग्रामणीकाः कबन्धा दयः सएषां ग्रामणीरिति कन् आत्रिकूटं त्रिकूटपर्व्वतमभि व्याप्य जगत् निर्जङ्गमं निर्जन्तुकमकार्षुः तान् महीपतेः रामस्य कथमवध्यान् ब्रूषे अशिष्टनिग्रहोहि महीपतेर्धर्मः जङ्गमइति गमेर्यङ्लुगन्तस्यापि रूपं ॥ १२९ ॥

आत्रीत्यादि। पङ्गुवाल स्त्रियइत्यादि यदुक्तं तदुत्तरमाह ये त्वत्कास्त्वत्सेवकाः कबन्धादयस्त्रिकूटपर्व्वतमभिवाप्य जगत् निर्ज्जङ्गमं निर्ज्जन्तुकं अकार्षुः कृतवन्तः कृत्स्थामनिरूपं त्वां सेवन्तइति ढघेकादिति कः त्वमेव मुख्योयेषामिति वा तवासी इति वा विकारसंघेत्यादिना कः युष्मदस्मदोस्त्वाहावित्यादिना एकत्वे त्वदादेशः हे दशग्रीव तान् महीपतेराज्ञोरामस्यावध्यान् कथं ब्रूषे अशिष्टनिग्रहोहि महीपतेर्धर्मः ॥ १२९ ॥

अभिमानफलं प्रोक्तं यत्त्वया रामविग्रहे। विनेशुस्तेन शतशः कुलान्यसुररक्षसां ॥ १३० ॥

अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभः अभिमानफलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन निमित्तेन शतशोऽनेकशः असुर रक्षसां कुलानि विनेशुः विनष्टानि ॥ १३० ॥

अभीत्यादि। मा भूद्रामविग्रहे रत्नादिलाभोऽभिमानफलं महत्त्वमस्तीति यत्त्वया प्रोक्तं तेन हेतुना शतशः शतं शतं असुराणां रक्षसाञ्च कुलानि विनेशुर्विनष्टानि ॥ १३० ॥

यत्त्वधर्म्ममधर्म्मत्वं दुर्व्वलं प्रत्यपद्यथाः। रिपौ रामे च निःशङ्कोनैतत्क्षेमङ्करञ्चिरं ॥ १३१ ॥

यत्त्वेत्यादि। यदधर्मं परस्त्रीभोगहरणं दुर्व्वलं असारं अश्रेयसां आवाहकत्वात् स्वधर्म्ममात्मीयमाचारं त्वं प्रत्यपद्यथाः प्रतिपन्नवानसि स्वधर्म्मएव नराशिनामिति लङि शनि रूपं यच्च रिपौ रामे निःशङ्कः निर्भयः विहरसि का मे साशङ्कता त्वयीति तदेतदुभयमपि न चिरं क्षेमङ्करं कल्याणकरं क्षेमप्रियमद्रेष्वेति खच् ॥ १३१ ॥

यदित्यादि। परस्त्रीभोगहरणं यत्त्वधर्म्ममात्मीयमाचारं धर्म्मरहितं दुर्व्वलमसारं प्रत्यपद्यथाः प्रतिपन्नवानसि यच्च रामे रिपौ त्वं निःशङ्कः निर्भयः का मे साशङ्कता त्वयीत्युक्तवान् तदेतदुभयं चिरं क्षेमङ्करं कल्याणदायकं न भविष्यति क्षेमप्रियमद्रात्कृञिति खः ॥ १३१ ॥

अन्वयादिविभिन्नानां यथा सख्यमनीप्सितं। नैषी
र्व्विरोधमप्येवं सार्द्धं पुरुषवानरैः॥१३२॥

अन्वेत्यादि। यथा नरादीनां अन्वयादिभिर्दूरविभिन्नत्वात् सख्यमनीप्सितं आप्तुमनिष्टं एवं पुरुषवानरैः सार्द्धं विग्रहमपि नैषीः नेष्टवानसि॥१३२॥

अन्वयेत्यादि। ब्रूहि दूरविभिन्नानामित्यादि यदुक्तं तदुत्तरमिदं अन्वयादिविभिन्नानां नरवानररक्षसां यथा सख्यमनीप्सितं नेष्टं विरोधमप्येवं पुरुषवानरैः सह नैषीः न इच्छ मायोगे टी॥१३२॥

विराधं तपसां विघ्नं जघान विजितोयदि। वरो
धनुर्भृतां रामः सकथं न विवक्षितः॥१३३॥

विरेत्यादि। तपसां विघ्नं विराधं विहन्यतेऽस्मिन्निति घञर्थे कविधानमिति कः तादृक् छलेनापि हन्तुं न दोषायेति दर्शयति धनुर्भृतां वरः श्रेष्ठः सन् विजितोऽभिभूतोऽपि रामोयदि जघान स कथं न विवक्षितः यतोराममप्यसौ जितवान्॥१३३॥

विराधमित्यादि। एकोद्वाभ्यामिति यदुक्तं तदुत्तरमाह धनुर्धराणां श्रेष्ठोऽपि रामः आदौ विजितोऽभिभूतोऽपि सन् पश्चात्तपसां विघ्नमन्तरायं विराधं यदि जघान तदा कथं स

विराधोन विवक्षितः न प्रसिद्धः अपि तु विवक्षितएव सराम इत्यन्ये विहन्यतेऽस्मिन्निति विघ्नः अभिधानादाधारे टक्॥१३३॥

प्रणश्यन्नपि नाशक्नोदत्येतुं वाणगोचरं। त्वयैवोक्तं महामायोमारीचोरामहस्तिनः॥१३४॥

प्रणेत्यादि। मारीचः प्रणश्यन्नपि पलायनपरोऽपि सन् महामायः कनकमृगरूपधारित्वात् रामहस्तिनः रामोहस्तीव तस्य वाणगोचरं वाणपदवीं अत्येतुं अतिक्रमितुं नाशक्नोत् न शक्तवानिति त्वयैवोक्तं ममारेत्यभिदधता न मया यदि शक्नोति अतिक्रमितुं न ममार॥१३४॥

प्रणश्यन्नित्यादि। मन्नियोगाच्च मारीचइत्यादि यदुक्तं तदुत्तरमाह महती माया यस्य समारीचः प्रणश्यन्नपि पलायमानोऽपि रामहस्तिनोवाणगोचरं वाणपदवीं अत्येतुं अतिक्रमितुं न अशक्नोत् न शक्तोऽभूत् इति तु त्वयैवोक्तं रामोहस्तीव बलवत्त्वात् एतेन रामस्य धन्विश्रेष्ठत्वमस्त्येवेति सूचितं॥१३४॥

अन्यासक्तस्य यद्वीर्य्यं न त्वं स्मरसि वालिनः। मूर्च्छावान्नमतः सन्ध्यां ध्रुवं तद्वाङ्गपीडितः॥१३५॥

अन्येत्यादि। सन्ध्यादेवतां नमतो अन्यासक्तस्य वालिनोयद्वीर्य्यं सामर्थ्यं तत् ध्रुवमवश्यं त्वं न स्मरसि न चिंतयसि कुतः वाङ्गपीडितः

सन् मूर्च्छावान् जातः अतएव न स्मरसि येनैवमुक्तवानसि॥ १२५॥

अन्येत्यादि। निजघानान्यसंसक्तमित्यादि यदुक्तं तदुत्तर माह अन्यासक्तस्य वालिनोयद्वीर्य्यं तत्त्वं ध्रुवं न स्मरसि कीदृ शस्त्वं सन्ध्यां नमतोवन्दमानस्य तस्य वाहुपीडितः सन् मूर्च्छा वान् एतेन वालिवधेऽपि महत्त्वमस्तीति सूचितं॥ १२५॥

असद्बन्धुवधोपज्ञं विमुञ्च वलिविग्रहं। सीतामर्पय नन्तव्ये कोषदण्डात्मभूमिभिः॥ १२६॥

निजघानान्यसंसक्तमिति उपसंहरन्नाह असदित्यादि। यतो बलवत्त्वोऽपि वलीयान् रामः तस्माद्बलिना रामेण सह विग्रहं मुञ्च त्यज कीदृशं बन्धुवधोपज्ञं प्रथमतोज्ञातिविनाशेन विदित मित्यर्थः उपज्ञायतइत्युपज्ञा इगुपधेति कः बन्धुवधस्योपज्ञेति सः उपज्ञोपक्रममिति नपुंसकलिङ्गता तत्सामानाधिकरण्याद सदिति नपुंसकलिङ्गता नन्तव्ये प्रणामार्हे कोषदण्डात्मभूतिभिः सह सीतामर्पय॥ १२६॥

असदित्यादि। तस्मात् बलिना रामेण सह विग्रहं विरोधं विमुञ्च त्यज कीदृशं असतां बन्धूनां वधस्य उपज्ञं प्रथमतोज्ञा तिवधेनावेदितमित्यर्थः उपज्ञायते यतइत्युपज्ञ आतइति ङः परमते उपज्ञोपक्रमयोरादिकथने क्लीवत्वं तन्मते असतां बन्धूनां बधस्य उपज्ञा प्रथमतोज्ञानं यस्मादिति बहुब्रीहिः एतेन राव

यस्य बन्धुवधेन भविष्यतीति यत् ध्यानमासीत् बलिविग्रहेण तदभावइति सूचितं तस्मात् नन्तथे प्रयस्ये रामे कोषादिभिः सीतां समर्प्य ॥ १२६ ॥

स्फुटपरुषमसह्यमित्यमुच्चैः सदसि मरुत्तनयेन भाष्यमाणः। परिजनमभितोविलोक्य दाहं दशव दनः प्रदिदेश वानरस्य ॥ १२७ ॥

इति प्रकीर्णकाः॥

इति भट्टिकाव्येऽशोकवनप्रभञ्जनं नाम नवमः सर्गः ॥ ९ ॥

स्फुटेत्यादि। इत्थं स्फुटपरुषं उक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं सोढुमशक्यं उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन भाष्यमाणोऽभिहितः इत्यमित्यनेन वस्तुनः परिसमापितत्वात् तेन वर्त्तमानसामीप्यइति लट् परिजनमभितः उभयपार्श्वे स्थितान् भृत्यान्विलोक्य वानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ १२७ ॥

इति भट्टिकाव्यटीकायां जयमङ्गलायामधिकारकाण्डे चतुर्थः परिच्छेदः। काव्यस्य मारुतिसंयमोनाम नवमः सर्गः ॥ ९ ॥

स्फुटेत्यादि। इत्थमुक्तप्रकारेण स्फुटं स्पष्टं परुषं रूक्षं अतएवासह्यं उच्चैर्महता ध्वनिना सदसि सभायां मरुत्तनयेन

हनूमता भाष्यमाणउक्तः सन् अभितउभयपार्श्वे परिजनं विलोक्य दशवदनोरावणोवानरस्य दाहं प्रदिदेश आदिष्टवान् ॥ ७१३॥ इति प्रकीर्णकाः॥

इति सद्वैद्यहरिहरखानवंशसम्भवगौराङ्गमल्लीकात्मजश्री भरतसेनविरचितायां भट्टिटीकायां मुग्धबोधिन्यां नवमः सर्गः॥ ९ ॥

समाप्तमधिकारकाण्डं॥

अथ सवल्कदुकूलकुथादिभिः परिगतोज्वलदुद्धत वालधिः। उदपतद्दिवमाकुललोचनैर्नृरिपुभिः सभयै रभिवीक्षितः॥ अनुप्रासवत्॥१॥

शब्दलक्षणमुक्तमपि लक्षयन् काव्यलक्षणार्थं प्रसन्नकाण्डमुच्यते काव्यस्याच प्रसन्नत्वात् प्रथमश्चेदं लक्षणं यत्प्रसन्नतानाम अविद्वदङ्गनाबालप्रतीतार्थं प्रसन्नवदिति शब्दलक्षणं पुनः प्रकीर्णमेव द्रष्टव्यं तत्चास्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कारमाधुर्य्यप्रदर्शनदोषाः भाषासमावेशश्चेति तत्चालङ्कारोद्विविधः शब्दालङ्कारोऽर्थालङ्कारश्चेति तत्र पूर्व्वोद्विविधः अनुप्रासोयमकश्चेति उभयं दर्शयन्नाह। अथेति। अथ दाहादेशानन्तरं स वानरोवियदाकाशमुदपतत् उत्पतितवान् वल्कं अंशुकं शुल्कवल्कोल्कादति निपातनं आदिशब्दादन्यैरपि मुञ्जादिभिः परिगतः परिवेष्टितः ज्वलन्नुद्धतऊर्द्धीकृतोवालधिः पुच्छं यस्य सः नृरिपुभिः राक्षसैः सभयैराकुललोचनैरभिवीक्षितः किमयमनुष्ठास्यतीति अनुप्रासवदिति अनुप्रासोयस्मिन्विद्यतइति तस्य च लक्षणं सरूपवर्णविन्यासमनुप्रासं प्रचक्षतइति॥ १॥

अथ प्रकीर्णकशब्दलक्षणमुक्तं काव्यं लक्षयन् प्रसन्नकाण्ड मारभते काव्यस्यात्र प्रसन्नत्वात् प्रसादः शब्दार्थयोर्गुणविशेषः तचास्मिन् काण्डे चत्वारः परिच्छेदाः अलङ्कारस्य माधुर्य्या दिगुणस्य भाविकस्य भाषासमावेशस्य च दर्शनात् काव्यशो भाजनकोऽलङ्कारः सच द्विविधः शब्दालङ्कारोऽर्थालङ्कारश्च तत्र पूर्व्वोद्विविधः अनुप्रासोयमकश्च तत्र प्रथममनुप्रासशब्दा लङ्कारं प्रदर्शयति। अथेत्यादि। दाहादेशानन्तरं सवानरो वियदाकाशं उदपतत् उद्गतवान् कीदृशः वल्कैस्तरुविशेषत्व ग्भिर्दुकूलैः चामैः कुथैश्चित्रकम्बलैःआदिशब्दात् कुशादिभिश्च परिगतोवेष्टितः ज्वलन् उद्धतऊर्द्धीकृतोवालधिः पुच्छं यस्य सः तथा नृरिपुभिः राचसैरभिवीचितश्राभिमुख्येन भासितः कीदृशैः किमयं करिष्यतीति सभयैस्त्रासयुक्तैः अतएव आकुललोचनैः आकुलानि इतस्ततः परिचिप्तानि लोचनानि येषां वल्कं वल्कलमस्त्रियामित्यमरः कार्पासं वादरं क्षौमं दुकूलाद्यञ्च वल्कलमित्यमरमाला कुथपदस्थाने कुशपदं केचित्पठन्ति वाल हस्तस्तु वालधिरित्यमरः द्रुतविलम्बितनामवृत्तमिदं तल्लक्षणं यथा द्रुतविलम्बितमाह नभौभराविति। अनुप्रासवदिति अनु प्रासोविद्यतेऽस्मिन्निति मोङ्मञ्चपादेतुरिति वतुः वर्णानुवृत्ति रनुप्रासः तथाच वर्णानामनुवृत्तिर्या नातिदूरान्तरश्रुतिः। अनुप्रासः सतेनैव सनाथा काव्यपद्धतिरिति। सरूपवर्णविन्यास मनुप्रासं प्रचक्षतइति च अनुप्रासोद्विविधश्छेकानुप्रासश्छेका

नुप्रासस्य अनेकस्य वर्णस्य सकृत्साम्यं छेकानुप्रासः सएवो त्कृष्टत्वादिह प्रदर्शितः॥१॥

रणपण्डितोऽग्र्यविबुधारिपुरे कलहं स रामम्हितः कृतवान्। ज्वलदग्निरावणगृहञ्च बलात्कलहंस रामम्हितः कृतवान्॥ युक्पादयमकं॥२॥

यमकस्यापि लक्षणं तुल्यश्रुतीनां भिन्नानामभिधेयैः परस्परं। वर्णानां यः पुनर्वादो यमकन्तन्निरूप्यतइति तदनेकविधं दर्शय न्नाह। रणेति। स कपिः वियदुत्पतितो राममहितो रामपूजितः रणपण्डितो युद्धकुशलः अग्र्यविबुधारिपुरे अग्र्यो यो विबुधः इन्द्रः तस्य योरिपुर्दशाननस्तस्य पुरे लङ्कायां कलहं कृतवान् कलहं सान् रमयतीति कलहंसरामं रमेर्ण्यन्तात्कर्मण्यण् तादृशं राव णगृहं बलाद्वार्य्यमाणोऽपि ज्वलदग्नि दीप्यमानपावकं कृतवान् कृतं विद्यते यस्येति कृतापेचीत्यर्थः। अहितः शत्रुः युक्पादय मकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यमितत्वात्॥२॥

अथ यमकान्युच्यन्ते तल्लक्षणं यथा तुल्यश्रुतीनां भिन्नानाम भिधेयैः परस्परं। वर्णानां यः पुनर्वादो यमकं तन्निरूप्यतइति अस्य भेदावहवः काव्यप्रकाशादौ दर्शिताः केचनात्र दर्शिताः तत्र प्रथमं युक्पादयमकं दर्शयति रणेत्यादि। अग्र्यस्य श्रेष्ठस्य विबुधस्य इन्द्रस्य योऽरिः प्रचुर्दशाननः तस्य पुरे लङ्कायां ब

कपिः कलहं युद्धं कृतवान् रावणस्य गृहं ज्वलदग्नि दीप्यमान पावकं बलाद्वार्य्यमाणोऽपि कृतवान् चकार रावणगृहं कीदृशं कलहंसरामं कलहंसेन कादम्बेन राममभिरामं कलहंसान् रमते रमयतीति अन्तर्भूतण्यर्थाद्रमेः कृतृषशिति षण् वा कल हंसा रमन्तेऽत्रेत्याधारे घञ् वा यद्वा बलेन रूपेण अतो अतन्तो गच्छन्त्यः कलहंसरामा राजपत्न्यो यत्र गृहे तत्तथा स कीदृशः रणपण्डितः युद्धकुशलः राममहितः रामेण महितः पूजितः मह पूजे श्चार्थैश्चार्थेत्यादिना वर्त्तमानविहितः क्तोभूतक्तस्य बाधक इति केचित् वस्तुतस्तु भूते कर्म्मणि क्तः ञ्यनुबन्धादिभ्योवर्त्तमान क्तेनातीतक्तस्य बाधेन प्रमाणमिति कातन्त्रटीकाकृताप्युक्तं अहितः शत्रुरर्थाद्राक्षसानां अस्य विष्णोरामरूपस्य हितइतिवा कृतवान् कृती कार्य्यज्ञः हिंसावान् वा बलं गन्धरसे रूपेस्था मनि स्थौल्यसैन्ययोरिति रभसः कलहंसस्तु कादम्बे राजहंसे नृपोत्तमेइति कृतं युगेऽपि हिंसायां पर्य्याप्ते विहिते कुलेइति विश्वः युक्पादयमकमिति युजोर्द्वितीयचतुर्थयोः पादयोर्यम कितत्वात् तथाच द्वितीये च चतुर्थे च यमकं यत्र दृश्यते। युक्पादयमकं तत्तु विज्ञेयं कविपुङ्गवैरिति॥२॥

निखिलाभवन्न सहसा सहसा ज्वलनेन पूः प्रभवता भवता। वनिताजनेन वियता वियता त्रिपुरापदं नगमिता गमिता॥ पादान्तयमकं॥३॥

